नैपालकविदुषा पण्डितडिल्लीराजशर्मणा विरचितं
ग्रन्थयुगलम्

# कन्योद्वाहसमयमीमांसा
# विधवोद्वाहतिमिरालोकश्च

Kanyodvahasamayamimansa
&
Vidhavodvahatimiralokah


Written by
**Pt. Dilli Raj Sharma**

# प्रकाशकस्य मन्तव्यम्

पञ्चपञ्चाशद्वर्षपूर्वं पूज्यपितृपादेन प्राध्यापकेन डिल्लीराजशर्मणा विरचितस्य प्रस्तुतधर्मशास्त्रग्रन्थस्य पाण्डुलिपिश्चिरकालं यावत् पुस्तकधान्या गर्भगृहेऽतिष्ठत् । सम्प्रति पुनस्तत्रभवतः प्रेरणयैतस्य ग्रन्थस्य प्रकाशनं सञ्जातमिति कथने नात्युक्तिः । देववाण्यां विरचितो ग्रन्थोऽयं संस्कृतवाङ्मयसेविनां धर्मशास्त्रमर्मज्ञानां च विदुषां कृते प्रमोदाय समुपयोगाय नवानुभूतये च भवेदिति मामकीनो विश्वासः ।

सनातनो हिन्दुधर्मः समाजस्य स्थिरतायै सुव्यवस्थापनाय च समाजस्य प्रारम्भिकाङ्गरूपस्य परिवारस्य शुद्धौ विशेषमहत्त्वमादधाति । सामाजिकस्थिते-रुच्छृङ्खलत्वे वर्णसङ्करबहुलत्वे च तद्दोषः परिवारेषु समुत्पद्येतेति परिवारसङ्घटनेकवधाननैरन्तर्यं दृग्गोचरीकृत्यास्मत्पूर्वजैराचारसंहितानिर्माणं व्यधायि । वर्णसङ्करबहुले समाजे कश्चिदपि जनो धर्मार्थकाममोक्षरूपपुरुषार्थसाधने न क्षम इत्यस्माकं पूर्वजा मुनयः शास्त्रकाराश्च परिवारघटनस्य प्रथमसोपानरूपं विवाहबन्धनं व्यवस्थापितवन्तः। षोडशसंस्कारेषु विवाहस्य विशिष्टं महत्त्वमुपपाद्य ते विवाहस्य निर्दुष्टपरम्परासंरक्षणाय विवाहकालस्य विवाहकार्यसम्पादनस्य विवाह-गर्भाधानावकाशसमयस्य च विषये विवाहितयोः पत्युः पत्न्या वा निधने जाते तदीयपरिवारस्य वर्णसाङ्कर्यदोषस्पर्शनिवारणस्य सम्बन्धे च कीदृश्याचारपद्धतिः समुचितेति विशदमनुसन्धाय स्वनिष्कर्षं प्रत्यपादयन् । अमुमेव विषयमवलम्ब्य **कन्योद्वाहसमयमीमांसा विधवोद्वाहतिमिरालोक**श्चेति ग्रन्थद्वयं निर्मितमस्ति ।

अस्य ग्रन्थद्वयस्य सम्पादने मुद्रणादिकार्ये च समर्पितचित्तः प्राध्यापकः डा. माधवभट्टराईमहाभागः सविशेषं धन्यवादार्हो विद्यते यस्य सश्रमसहयोगेनाहं नितरामनुगृहीतोऽस्मि ।

अन्ततः, अस्य ग्रन्थयुगलस्य प्रकाशनेन सनातनधर्मावलम्बिनि हिन्दुसमाजे पाणिग्रहणविषयकं शास्त्रीयज्ञानमुपलभ्य विद्यमानप्रदूषितभौतिकावस्थातः किञ्चिन्मात्रमपि समुन्नतदृष्ट्या विचारणाय प्रेरणा समेषां जायतामिति परमात्मानं प्रार्थये ।

अच्युतराज रेग्मी

वैक्रमाब्दः २०५१।१२।१५

ख-२/७०५
महादेवस्थानम्, बानेश्वरः,
काण्ठमण्डपः, नेपालः ।
दूरभाषः ४७०१९५

# आमुखम्

अध्यापकरूपेण नैपालकविद्वत्समाजे ख्यातिमापन्नो डिल्लीराजशर्मा (रेग्मी) सिद्धहस्तो ग्रन्थकारश्चापि वेविद्यत इति **कन्योद्वाहसमयमीमांसा विधवोद्वाहतिमिरालोक**श्चेति ग्रन्थयुगलस्यावलोकनाद् विज्ञायते । अथच विविधशास्त्रेषु गभीरपाण्डित्यं दधानस्तत्रभवान् विशेषेण व्याकरणशास्त्रे धर्मशास्त्रे मीमांसादिदर्शनेषु चाप्रतिहतगतिरिरिति प्रमाणीभवति ।

श्रीडिल्लीराजशर्मा १९५२तमे वैक्रमाब्दे पश्चिमनेपालस्य पाल्पामण्डले समजनि । धर्मशास्त्राचार्यं काव्यतीर्थञ्चेत्युपाधिद्वयं लभमानोऽसौ महानुभावः १९९०तमवैक्रमाब्दात् २००८तमं वैक्रमाब्दं यावत् काष्ठमण्डपस्थरानीपोखरीसंस्कृतपाठशालायामध्याप्य २००९तमवैक्रमाब्दात् काष्ठमण्डपस्थराजकीयसंस्कृतमहाविद्यालये धर्मशास्त्रविषय-मध्यापयन् २०१९तमवैक्रमाब्दे सांसारिकलीलां परिसमाप्तवान् ।

नेपाले संस्कृतविद्वत्परम्पराया इतिहासः समृद्धोऽस्तीति तद्विदो वदन्ति । प्रायो द्विसहस्राब्दव्यापिनि नैपालकसंस्कृतसाहित्येतिहासे प्रारम्भत एव काव्यरचनाप्रचारो दरीदृश्यते । नेपालेतिहासस्य प्राचीनार्वाचीनकालयो राजभाषा संस्कृतमेवासीदिति तदा संस्कृतस्य समृद्धिः स्फुटमनुमीयते । तदानीन्तना नैके संस्कृतग्रन्था अपि साम्प्रतं प्रत्यक्षप्रमाणत्वेन समुपलब्धा वेविद्यन्ते । तेषु काव्य-नाटकग्रन्था व्याकरणग्रन्था ज्यौतिषग्रन्थास्तन्त्रधर्मशास्त्रग्रन्थाश्च ख्यातिमापद्यन्ते । न केवलं संस्कृतविदो विद्वांसः किन्तु बहवो नेपालनृपाला अपि संस्कृतग्रन्थान् रचयामासुः । तत्राष्टमशताब्द्यां वर्तमानो विदग्धकाव्यनिपुणो लिच्छविनरेशो जयदेवः (द्वितीयः), सप्तदशशताब्द्यां वर्तमानो नानारूपकग्रन्थनिर्माणचतुरो मल्लनरेशो जगज्ज्योतिर्मल्लः, तस्यामेव शताब्द्यां वर्तमानोऽनेकभक्तिकाव्यप्रणयनपरः कवीन्द्रोपाधिधारी राजा प्रतापमल्लः, ऊनविंशशतके वर्तमानो बृहत्पुरश्चर्यार्णवनामकग्रन्थप्रणेता शाहनरपतिः प्रतापसिंहश्च विख्यातिं भजन्ते ।

श्रीडिल्लीराजशर्मा संस्कृतग्रन्थकारपरम्परायां ग्रन्थकाररूपेणेतः पूर्वं ख्यातिं न लभते, किन्तु ग्रन्थद्वयमिदं तदीयवैदुष्यख्यापनाय प्रभवतीति मन्यते । अद्यतः पञ्चपञ्चाशद्वर्षपूर्वं प्रणीतं ग्रन्थयुगलमिदं ग्रन्थकारस्य जन्मशताब्दीवर्षावसरे प्रकाशं समेतीति महतः हर्षस्य संयोगस्य च विषयः ।

अस्मिन् ग्रन्थयुगले नारीसमस्यायाः पक्षद्वये विशदं निरूपितमस्ति कन्याविवाहकालविषये विधवाविवाहविषये च । साम्प्रतिकजगति विषयद्वयमिदं निश्चप्रचमपि विवादास्पदीभूतं भवति । यतो वर्तमानसमये कन्याविवाहस्य समर्थनं विधवाविवाहस्य विरोधश्च प्रातिकूल्यं भजतः । परन्तु विहिते गभीरविश्लेषणे समाजस्य निर्दुष्टत्वाय विषयद्वयस्यास्यानुशीलनं सर्वेषां हितकरं प्रतीयत इति नात्र सन्देहलेशः ।

कन्याविवाह-विधवाविवाहयोरौचित्यानौचित्यविषये सम्प्रति जनानां विचारो यः कोऽपि स्यात्, नियमानां व्यवस्था या कापि स्यात् किन्तु ग्रन्थेऽस्मिन् धर्मशास्त्रीयविचारः परिचर्चितोऽस्ति । अस्माकं धर्मग्रन्थेष्वपि वस्तुतो विचारवैविध्यं संलक्ष्यते । यथा कन्याविवाहप्रकरणे कन्यात्वसम्बन्धे नैका विप्रतिपत्तयः सन्दृश्यन्ते। अनूढात्वं कन्यात्वम्, अरजोदर्शनात्वं कन्यात्वम्, उत पुरुषसम्पर्करहितत्वं कन्यात्वमिति विप्रतिपत्तिबाहुल्यं स्फुटं प्रतिपाद्य निष्कर्षरूपेण तेषां त्रयाणां समष्टावेव कन्यात्वं समर्थितं ग्रन्थकारेण ।

एवमेव कन्यावस्थायामेव विवाहसम्पादनविषये पूर्वोत्तरपक्षयोस्तर्कास्तथा प्रस्तुताः, यथा कस्याप्येकस्य पक्षस्य समर्थनेऽपि पर्याप्तानि शास्त्रीयप्रमाणानि समुपन्यस्तानि । इदमेव ग्रन्थस्यास्य वैशिष्ट्यं वैचित्र्यञ्च । तथैव च विधवाविवाहस्य पोषणे विविधग्रन्थानां प्रमाणानि समुपन्यस्य निष्कर्षे तद्विरोधे स्वमतं प्रकाशितम् । एतेनोभयदृष्ट्या विषयवस्तुनो विन्यसनाद् ग्रन्थोऽयं विशेषेणोपयोगितां बिभर्तीति विश्वसिमि । एतद्वचनमुदाहरणद्वारा स्फुटीक्रियते । यथा कन्यायाःपुनर्विवाहसम्बन्धे-

**वरो यद्यन्यजातीयः पतितः क्लीब एव च ।**
**विकर्मस्थः सगोत्रो वा दासो दीर्घामयोऽपि वा ॥**
**ऊढापि देया सान्यस्मै सहावरणभूषणा । (कात्यायनः)**
**सा चेदक्षतयोनिः स्याद् गतप्रत्यागतापि वा ।**
**पौनर्भवेन भर्त्रा सा पुनः संस्कारमर्हति ॥ (मनुः)**

इत्यादिरीत्या कन्यायाः पुनर्विवाहस्यादोषत्वं पूर्वपक्षरूपेण संस्थाप्योत्तरपक्षरूपेण तन्निषेधो व्यधायि ।

विधवाविवाहसम्बन्धेऽपि प्रथमं नानाप्रमाणैः पूर्वपक्षः परिपोषितः, पश्चात् सयुक्ति प्रत्याख्यातः । यथा-
**नष्टे मृते प्रव्रजिते क्लीबे च पतिते पतौ ।**
**पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते ॥ (पराशरः)**

देवराद् वा सपिण्डाद् वा स्त्रिया सम्यङ् नियुक्तया ।
प्रजेप्सिताऽधिगन्तव्या सन्तानस्य परिक्षये ॥ (मनुः)

रक्षेत् कन्यां पिता विन्नां पतिः पुत्राश्च वार्धके ।
अभावे ज्ञातयस्तेषां न स्त्री स्वातन्त्र्यमर्हति ॥ (याज्ञवल्क्यः)

न दत्त्वा कस्यचित् कन्यां पुनर्दद्याद् विचक्षणः ।
दत्त्वा पुनः प्रयच्छन् हि प्राप्नोति पुरुषानृतम् ॥ (मनुः)

उक्तोद्धरणावलोकनेन पक्षद्वयस्यापि मतं स्पष्टीकृतमिति प्रमाणीभवति । नियोगकरणाकरणसम्बन्धे ग्रन्थकारो वदति- "...उभयेषामपि तेषां वचनैर्विशेषत्वेन प्रबलैर्बाध: स्वीकर्तव्यो भवति ।"

विषयप्रतिपादने ग्रन्थकारमहाभागो नितरां क्षम: । विवेच्यविषयस्य पूर्वोत्तरपक्षनिरूपणेन साकं स्वनिष्कर्षप्रस्तुतौ तस्य कौशलमुदाहार्यमस्ति यस्य दिग्दर्शनं पूर्वं विहितम् ।

धर्मशास्त्रनिरूपणेन साकं यथास्थलं प्रसङ्गानुसारं वैदिकसाहित्यस्य व्याकरणस्य मीमांसाया महाभारतस्य पुराणानामपि चर्चा कृता । धर्मग्रन्थेषु मनु-याज्ञवल्क्य-यम-पराशरस्मृतीनां निर्णयसिन्धु-पारस्करगृह्यसूत्रादिविधग्रन्थानामालोडनेन समुपस्थापितो विचारसार: साम्प्रतिकसमाजे महतीमुपयोगितां लभते ।

ग्रन्थकारस्य शैली नातिगूढा न चाति परिस्फुटा प्रतिभाति । स्थले स्थले नैयायिकसरणिं समाश्रित्यापि विषयविशदीकरणेन ग्रन्थकार: सरलतामनुसरति । न केवलं विषयगाम्भीर्येऽपितु तार्किकत्वेऽपि डिल्लीराजशर्ममहाभागस्य लेखनशैली नितरां प्रशंसापदवीमधिरोहति । वस्तुत: पूर्वोत्तरपक्षप्रतिपादनपुर:सरं गभीर-तार्किक-सुव्यवस्थितपद्धत्या शास्त्रीयविषयनिरूपणे महानुभावोऽसौ समेषां नैपालकविदुषां पुर: पुष्कलं स्थानं ध्रुवमधिगच्छति ।

नेपाले संस्कृतग्रन्थप्रकाशनं नातिसुकरम् । मुद्रणालयेषु संस्कृतज्ञानां नैयून्यं कार्येऽस्मिन् काठिन्यं जनयति । प्रस्तुतग्रन्थप्रकाशनेऽपि तत् काठिन्यमन्वभावि । तथापि विलम्बेनापि तस्य प्रकाशनं सञ्जातमिति हर्षस्य विषय: ।

प्रस्तुतग्रन्थप्रकाशनप्रसङ्गे समन्वितोऽयं जन एतदवसरप्रदानाय नेपालसर्वकारस्य पूर्वमन्त्रिणे ग्रन्थकारात्मजाय अच्युतराजरेग्मीमहाभागाय साधुवादमर्पयति । तेन महानुभावेन प्रकृतग्रन्थं प्रकाश्य स्वजनकं प्रति समादर: प्रदर्शित:, संस्कृतवाङ्मयसंवर्धने महती श्रद्धा च प्रकटिता ।

ग्रन्थद्वयमिदं सम्प्रति विदुषां पुरतो वर्तते । अस्य सारगर्भत्वविषये प्रामाणिकत्वविषये च विशदं समीक्षणं स्यादिति मे मनीषा वर्तते ।

अन्ततो ग्रन्थकारस्य जन्मशताब्दीवर्षावसरे ग्रन्थद्वयस्यास्य प्रकाशनं महिमान्वितं सामयिकं चास्ति । एतेनैकतो ग्रन्थकर्तुर्वैदुष्यं प्रख्याप्यते चेदन्यतो विवाहकर्मसम्पादनविषयेऽस्माकं पूर्वजानां सूक्ष्मचिन्तनस्य परिचय उपलभ्यत इत्युक्त्वा विरमामि ।

**विदुषां विधेय :**

**१ वैशाख:, २०५२ वि.सं.**
(१४ अप्रिल, १९९५ ई.)

**डा. माधव भट्टराई**
अध्यक्ष:, अनिवार्यसंस्कृतविषयसमिते:,
महेन्द्रसंस्कृतविश्वविद्यालयस्य ,
अध्यक्ष : साहित्यविभागस्य, वाल्मीकि-
विद्यापीठस्य,काष्ठमण्डपनेपालस्थस्य ।

# अथ कन्योद्वाहसमयमीमांसा

## कन्यात्वविचारः

तत्र तावत्कन्यात्वमेव मीमांस्यते- किन्नाम तत्त्वम् ?

अनूढात्वम् ? उत पुमसम्प्रयुक्तात्वम् ? आहोश्विदजातरजो-दर्शनात्वम् ? त्रिष्वप्येतेष्वर्थेषु 'कन्या'शब्दस्य प्रवृत्तिनिमित्तसद्भावसन्दर्शनात्- इति ।

**अथ पूर्वपक्षः**

तत्र केचिदेवमाहुः

**अनूढात्वं कन्यात्वम्-**

**पितृवेश्मनि या कन्या यं पुत्रं जनयेद्रहः ।**
**तं कानीनं वदेन्नाम्ना वोढुः कन्यासमुद्भवम् ॥**

९।१७२। इति **मनुना**, तथा-

**कन्यामृतुमतीं शुद्धां कृत्वा निष्कृतिमात्मनः ।**
**शुद्धिं च कारयित्वा तामुद्वहेदनृशंस्यधीः ॥**
**पिता ऋतून्स्वपुत्र्यास्तु गणयेदादितः सुधीः ।**
**दानावधि गृहे यत्नात्पालयेच्च रजोवतीम् ॥**
**दद्यात्तदृतुसंख्या गाः शक्तः कन्यापिता यदि ।**
**दातव्यैकापि निःस्वेन दाने तस्या यथाविधि ॥**
**दद्याद्वा ब्राह्मणेष्वन्नमतिनिःस्वः सदक्षिणम् ।**
**तस्यातीतर्तुसंख्येषु वराय प्रतिपादयेत् ॥**
**उपोष्य त्रिदिनं कन्यां रात्रौ पीत्वा गवां पयः ।**
**अदृष्टरजसे दद्यात् कन्यायै रत्नभूषणम् ॥**
**तामुद्वहन्वरश्चापि कुष्माण्डैर्जुहुयाद्द्विजः ।**

इति **निर्णयसिन्धौ**, **आश्वलायनेन**, तथा-

**विवाहे वितते यज्ञे होमकाल उपस्थिते ।**
**कन्यामृतुमतीं दृष्ट्वा कथं कुर्वन्ति याज्ञिकाः ॥**
**स्नापयित्वा तु तां कन्यामर्चयित्वा यथाविधि ।**
**युञ्जानामाहुतिं हुत्वा ततस्तत्र प्रवर्तयेत् ॥**

इति तत्रैव **मदनपारिजाते यज्ञपार्श्वेन**, तथा "अथ यदि कन्योपसाद्यमाना चोह्यमाना वा रजस्वला स्यात्तामनुमन्त्रयेत् । पुमांसौ मित्रावरुणौ पुमांसावश्विनावुभौ । पुमानिन्द्रश्च सूर्यश्च पुमांसं च दधात्वियम् । अथ द्वादशरात्रमलङ्कृत्य प्राशयेत्पञ्चगव्यमथ शुद्धां कृत्वा विवहेत्" इति तत्रैव **बौधायनेन** च जातरजोदर्शनायाः पुंसम्प्रयुक्तायाश्चाप्यनूढाया एव कन्या- पदप्रयोगव्यवहारप्रदर्शनान् । अत एव- **पाणिने**रपि "कन्यायाः कनीन चे"ति कन्याशब्दादपत्यार्थेऽण्प्रत्ययस्मरणमत्यन्तं संगच्छते । अन्यथा पुंसम्प्रयुक्ताया, जातरजोदर्शनायाश्च कन्यात्वाभावेन "कन्यायाः कनीन चे"-तिसूत्रं व्यर्थमेव भवेत् । अत एव च- **सिद्धान्तकौमुद्यां** "कन्यायाः कनीन चे"तिसूत्रव्याख्याने कानीनो व्यासः कर्णश्चेत्युदाहरणं ददतो **भट्टोजीदीक्षित**स्याऽप्यनूढाया एवाऽपत्यमित्यर्थ इति **स्पष्टो**ल्लेख,स्तथा-तस्यैव व्याख्याने- "ननु कन्या ह्यक्षतयोनिस्तस्याश्चाऽपत्यसंभव एव नास्तीत्या-शङ्कयाऽऽहाऽनूढाया इति" इति**तत्त्वबोधिनीकारस्यो**ल्लेखश्चातीव सुसङ्गच्छेते । ताभ्यां ह्यक्षतयोनित्वं नामाऽजातरजोदर्शनात्वमित्येवाऽभिप्रेत्य तत्त्वस्य त्वसम्भवमेव निश्चित्य तथा समाहितं सुस्पष्टमवगम्यते ।

एतेन- **सत्यवती-कुन्त्यो**रनुद्वाहावस्थायां **पराशरसूर्याभ्यां** व्यासकर्णयोर्जननेऽपि कन्यात्वमविरुद्धम् । अत एव हि–

**कुमार्याः पाणिं गृह्णीयाद्**

इति **पारस्करगृह्यसूत्रभाष्येषु**- "कुमार्या अनन्यपूर्विकाया" इति**विश्वनाथोक्ति**स्तथा- कुमार्या अनन्यपूर्विकायाः कन्यायाः अनेन विंशतिप्रसूतायाः स्मृत्यन्तरविहितस्य पुनर्विवाहस्याऽनियम इच्छा चेत्करोती" ति **हरिहरोक्ति**श्चेति द्वयमेव सुसङ्गतम् ।

तथा चैतावताऽनूढानां हि जातरजोदर्शनानां पुंसम्प्रयुक्तानाञ्चापि कन्यात्वमविरुद्धं भवति ।

**अप्रयच्छन्समाप्नोति भ्रूणहत्यामृतावृतौ ।**
**गम्यं त्वभावे दातॄणां कन्या कुर्यात्स्वयंवरम् ॥१।६४॥** इति

**याज्ञवल्क्येन**, तथा–

**काममामरणात्तिष्ठेद् गृहे कन्यर्तुमत्यपि ।**

**न चैवैनां प्रयच्छेत्तु गुणहीनाय कर्हिचित् ॥९।८९॥**

**त्रीणि वर्षाण्युदीक्षेत कुमार्यृतुमती सती ।**

**ऊर्ध्वन्तु कालादेतस्माद्विन्देत सदृशं पतिम् ॥९।९०॥**

**अलङ्कारं नाददीत पित्र्यं कन्या स्वयंवरा ।**

**मातृकं भ्रातृदत्तं वा स्तेना स्याद्यदि तं हरेत् ॥९।९२॥**

**पित्रे दद्यान्न शुल्कन्तु कन्यामृतुमतीं हरन् ।**

**स हि स्वाम्यादतिक्राम्येदृतूनां प्रतिरोधनात् ॥९।९३॥**

इति **मनुना,** तथा-

**वरयित्वा तु यः कश्चित्प्रणश्येत्पुरुषो यदा ।**

**रक्तागमांस्त्रीनतीत्य कन्याऽन्यं वरयेद्वरम् ॥**

**इत्यपरार्के कात्यायनेन**, तथा-

**ऋतुत्रयमुपास्यैव कन्या कुर्यात्स्वयंवरम् ॥**

इति तत्रैव **विष्णुना,** तथा–

**प्रतिगृह्य तु यः कश्चिद्वरो देशान्तरं व्रजेत् ।**

**त्रीनृतून्समतिक्रम्य कन्याऽन्यं वरयेद्वरम् ॥**

इतिस्मृत्यन्तरवचने च जातरजोदर्शनानामप्यनूढानामेव कन्यात्व-व्यवहरणात् ।

अत एव- पूर्वत्रोदाहृतवचनेषु तत्र तत्र कन्याकुमारीशब्दौ प्रयुक्तौ, तयोश्च नार्थान्तरत्वमाभिधानिका अपि पठन्ति; तद्यथा- "कन्या नार्यां कुमार्यां च"ति**हैमः**„ "कन्या कुमारिकानार्योरिरिति **मेदिनी** च । तदेवम्-

**अनूढात्वमेव कन्यात्वमिति ।**

परे त्वेवमाहुः-

**पुमसम्प्रयुक्तात्वं कन्यात्वम् ।**

**उद्वाहितापि सा कन्या न चेत् सम्प्राप्तमैथुना ।**

**पुनः संस्कारमर्हेत यथा कन्या तथैव सा ॥**

इति **नारदेन निर्णयसिन्धौ**- उद्वाहितायाा जातरजोदर्शनायाश्चापि पुमसम्प्रयुक्ताया एव कन्यात्वं प्रतिपाद्य पुनर्विवाहस्मरणात् अत

एवेदमेवाऽभिप्रेत्य-

**वरो यद्यन्यजातीयः पतितः क्लीव एव च ।**
**बिकर्मस्थः सगोत्रो वा दासो दीर्घामयोपि वा ॥**
**ऊढापि देया साऽन्यस्मै सहावरणभूषणा ।**

इति तत्रैव **कात्यायनेनापि** जात्यन्तरीय-पतित-क्लीव-विकर्मस्थ-सगोत्र-दास-दीर्घामयादिभिःसकृदूढाया अपि पुनरन्यस्मै प्रदानप्रतिपादनमतीव युज्यते । अत एव **विज्ञानेश्वरोपि**- **अक्षता च क्षता चैव पुनर्भूः संस्कृता पुनः ॥**

इति **याज्ञवल्क्य**वचनव्याख्याने- "क्षतात्वं पुंसम्प्रयुक्तात्वम्" "अक्षतात्वञ्च पुमसम्प्रयुक्तात्वम्" इत्येवाऽभिप्रेत्य- "तत्र क्षता संस्कारात् प्रागेव पुरुषसंबन्धदूषिता, अक्षता पुनः संस्कारदूषिता" इति **मिताक्षरायाम**ुक्तवान् । एतेन- पुमसम्प्रयुक्तात्वमेव कन्यात्वं, न त्वनूढात्वमजातरजोर्दनात्वञ्चापीति निश्चेतुं सुशक्यमेव, यतः खलु पुंसम्प्रयोगद्वारैव क्षतात्वं प्रतिपादितं तेन, न तु तथोद्वाहद्वारा रजोदर्शनद्वारा च । तथा च-

**पूर्वदत्ता तु या कन्या, अन्येनोढा यदा भवेत् ।**
**संस्कृतापि प्रदेया स्याद्यस्मै पूर्वं प्रतिश्रुता ॥**

**इत्यपरार्के** मनोदत्ताया, वाग्दत्ताया, वैवाहिमन्त्रसंस्कृतायाश्चापि पुमसम्प्रयुक्ताया एव कन्यात्वं प्रतिपाद्य पुनर्विवाहस्मरणं **कात्यायन**स्याप्यतीव सुसङ्गच्छते । अत एव तत्रैव- "कन्या, कुत्सिता,ऽन्यजातीयकर्मशीला, व्याध्युपहता, परिणीता यद्यक्षतयोनिः स्यात्परित्यक्तव्या" इति **सुमन्तुनो**द्वाहिताया जातरजोदर्शनायाश्चापि पुमसम्प्रयुक्ताया एव कन्यात्वं प्रतिपाद्य परित्यागोऽभिहितः, अन्यथा "य़द्यक्षतयोनिःस्या"-दिति हेतुत्वेनोपन्यासं नाकरिष्यत्सः, पुमसम्प्रयोगेणैवाऽक्षतयोनित्वं, नत्वनुद्वाहेन रजोदर्शनाभावेन चापीति तस्याऽन्तःकरणसिद्धान्तात् । तथा चैवंस्थिते-

**सिद्धान्तकौमुद्यां**- "कुमार्यां वयसी" ति **पाणिनेः** सूत्रस्य "वृद्धकुमारी"त्युदाहरणं प्रदर्शयता **भट्टोजीदीक्षितेन** पुंसा सहाऽसम्प्रयोगमात्रं प्रवृत्तिनिमित्तमुपादायैव प्रयुक्तस्य कुमारीशब्दस्य वृद्धाशब्देन सामानाधिकरण्यमुपपादितं सङ्गच्छते, अन्यथा कुमारीशब्दस्य प्रथमवयो-वाचकतया वृद्धाशब्देन सामानाधिकरण्याभावात्तयोर्विशेष्यविशेषणभावा-

संभवेन"**विशेषणं विशेष्येण बहुल**"मिति विशेषणसमासस्य "**पुंवत्कर्मधारयजातीयदेशीयेयु**" इति पुंवद्भावस्य च विषयत्वाभावेन कुमारीशब्दे परे पूर्वपदान्तोदात्तत्वविधायकस्य "**कुमार्यां वयसी**"ति **पाणिने**:सूत्रस्य, तद्व्याख्याने **भट्टोजीदीक्षित**कृतोपपादनस्यापि वैयर्थ्यमेव भवेत्, इति तदङ्गीकरणीयत्वेनैतत्त्रयमपि सिद्धम् । अत एव लोकेपि "वृद्धकुमारी", वृद्धकन्या," "ममैषा कन्या वृद्धा जाता"इत्येवमादिको व्यवहारश्च प्रसिद्धयति । एतावता लोकेपि वृद्धकन्यानां पुत्रवद्दायहरणं केषाञ्चित् सङ्गच्छते । तदेवम्-

**पुमसम्प्रयुक्तात्वमेव कन्यात्वमिति ।**

**अपरे** तु पुनरेवमाहु:-

**अजातरजोदर्शनात्वं कन्यात्वम् ।**
**सा चेदक्षतयोनि: स्याद्गतप्रत्यागतापि वा ।**
**पौनर्भवेन भर्त्रा सा पुन:संस्कारमर्हति ॥९।१७६॥**

इति **मनु**वचनेन-"सकृदुद्वाहिता गतप्रत्यागता-गता पूर्वोद्वाहकं त्वक्त्वा पुरुषान्तरसम्प्रयोगं प्राप्तापि प्रत्यागता पुनस्तमेव प्रत्यावृत्ता, वा-अथवा अपिशब्दादनुद्वाहितापि गतप्रत्यागता गता पूर्वं पुंसम्प्रयोगं प्राप्तापि, गतप्रत्यागता-पश्चात्ततो निवृत्ता सती, अक्षतयोनि: स्याच्चेद्रजोदर्शनेन क्षतयोनिर्न भवेद्यदि, सा-तादृशी द्विविधापि रजोदर्शनाभावेन कन्यात्वस्याऽप्रणाशात् पौनर्भवेन भर्त्रा सह पुनर्विवाहसंस्कारमर्हति" इत्यर्थबोधकेनाऽजातरजोदर्शनाया एव पुंसम्प्रयुक्ताया अनूढायाश्चापि द्विविधाया रजोदर्शनाभावेन कन्यात्वस्याऽप्रणाशमभिप्रेत्य पुनर्विवाहसंस्कारप्रतिपादनात् । अत एव-

**उद्वाहात्प्रथमे शुचौ यदि वसेद्भर्त्तुर्गृहे कन्यका**
**हन्यात्तज्जननीं क्षये निजतनुं ज्येष्ठे पतिजेष्ठकम् ।**
**पौषे च श्वशुरं पतिं च मलिने चैत्रे स्वपित्रालये**
**तिष्ठन्ती पितरं निहन्ति न भयं तेषामभावे भवेत् ॥**

इति **निर्णयसिन्ध्वादिषु** ज्योतिर्निबन्धवचनेनाऽप्यूढाया: पुंसम्प्रयुक्तायाश्चापि कन्यापदेनाऽभिधानमतीव सुसङ्गच्छते । तदेवम्-

**अजातरजोदर्शनात्वमेव कन्यात्वम्** इति ।

**इति पूर्वपक्ष: ।**

अथोत्तरपक्षः

तदित्थं सति विप्रतिषेधे वयन्त्वथैवं पूर्वं पूर्वपक्षिभिः प्रमाणत्वेनोदाहृतानां स्मृतिवचनानां सिद्धान्तपक्षे यथायथं सुसङ्गतिं प्रदर्शयन्तः सन्तः प्रथमतस्तेषां त्रयाणामेव पक्षाणां व्यष्टिभावं निराकुर्मः-

## अनूढात्वस्य कन्यात्वं वदतां खण्डनम्

तत्र तावदनूढात्वमात्रकन्यात्ववादिभिः "पितृवेश्मनि या कन्ये"त्यादीति **मानवादिवचनानि** यान्युदाहृतानि तत्र किञ्चिदेवं प्रतिवदामः-

"न तावत्तेन वचननिचयेन मन्वादिभिः कन्यात्वस्य लक्षणं कृतमपितु जातापत्यादावप्यनूढामात्ररूपार्थे कन्यापदं प्रयुक्तमित्येव तेषामाख्यानम् । अथच- तमेव जातापत्यादावप्यनूढामात्ररूपार्थे कन्यापदप्रयोगं साधनं कृत्वा जातापत्यादावप्यनूढामात्ररूपार्थे पक्षे कन्यात्वसिषाधयिषायामपि तेषामभिमतमेव यद्यभविष्यत्तर्हि "प्रथमग्रासे मक्षिकापात" इति न्यायेन प्रथमत एव "पितृवेश्मनि या कन्ये" ति मानववचनं प्रमाणत्वेन नैवोदाहरिष्यन् ।

**सा चेदक्षतयोनिः स्याद्गतप्रत्यागतापि वा ।**
**पौनर्भवेन भर्त्रा सा पुनः संस्कारमर्हति ॥**

इति पुनस्तेनैव **मनुना** पुनःसंस्कारस्मरणादेव हि सकृत् संस्कृताया अपीति बोधनेन सकृत्संस्कृताया अपि रजोदर्शनतः पुंसम्प्रयोगतश्चाक्षतयोन्यास्तथाऽनूढाया अपि "गतं गमनं पुंसम्प्रयोगस्ततः प्रत्यागतायाः प्रत्यावृत्तायाः क्षतयोन्या अर्थाज्जातरजोदर्शनायाः पुंसम्प्रयुक्ताया अप्यनूढाया इव पुमसम्प्रयुक्ताया ऊढाया अपि पुनः संस्कारार्हत्वस्मरणद्वारा कन्यात्वज्ञापनात्, अन्यथा अनूढाया एव कन्यात्वस्वीकारे तु रजोदर्शनतः कन्यात्वस्याऽप्रणाशेन तज्जन्य-दोषस्याप्यदोषत्वेन स्वीकर्तव्यतया पुनस्तैरेव पूर्वत्रोदाहृतैः "पित्रादि-रजोवत्युभयकर्तृकप्रायश्चित्तप्रतिपादक**निर्णयसिन्धुमदनपारिजातोद्धृताश्वलायनयज्ञपार्श्ववचनै** रजोदर्शनजन्यपित्रादिसंबन्धिस्वाम्यातिक्रमभ्रूणहत्यादिनानादोषाणां, जातरजोदर्शनाकर्तृकाणां गुणवद्वरलाभपक्षकपित्रादिकर्तृकदानाभावपक्षकर्तुत्रयोपासनोत्तरस्वयंवरविधानमातापितृभ्रातृदत्तालङ्काराऽग्रहणतद्ग्रहण-पक्षचौर्यरूपदोषसद्भावानां, वरकर्तृकजातरजोदर्शनापितृसम्प्रदानकशुल्कदानाभावस्य च प्रतिपादकै**र्मनुयाज्ञवल्क्याऽपराकोद्धृतकात्यायनयमविष्णु-स्मृत्यन्तरवचनै**श्चापि सह सुतरां विरोधो भवेत् । एवम् पुंसम्प्रयोगतोपि

कन्यात्वस्याऽ प्रणाशेन तज्जन्यदोषविशेषस्याऽ प्यदोषत्वेन स्वीकर्तव्यतयोद्वाहात् पूर्वं पुंसम्प्रयुक्तायास्तत्पित्रादीनामुपभुञ्जानस्य पुरुषान्तरस्य च दोषबोधक-स्मृतिवचनैश्चापि सह विप्रलापो भवेत्, स्मर्यन्ते ह्युद्वाहात्पूर्वं पुंसा सह सम्प्रयोगे सम्प्रयुक्तायास्तत्पित्रादीनामुपभुञ्जानपुरुषस्य चैवंविधा दोषाः, ते च यथा- तत्र तावन्**मनुः**-

**पित्रा भर्त्रा सुतैर्वापि नेच्छेद्विरहमात्मनः ।**
**एषां हि विरहेण स्त्री गर्ह्ये कुर्यादुभे कुले** ॥९।३॥ इति ।
**रेतःसेकः स्वयोनीषु कुमारीष्वन्त्यजासु च ।**
**सख्युः पुत्रस्य च स्त्रीषु गुरुतल्पसमं विदुः** ॥११।५८ इति च ।

तथा **याज्ञवल्क्योपि**-

**सखिभार्याकुमारीषु स्वयोनिष्वन्त्यजासु च ।**
**सगोत्रासु सुतस्त्रीषु गुरुतल्पसमं विदुः** ॥३।२३५॥ इति ।

**अपरार्के यमश्च**-

**रेतः सेके कुमारीषु चाण्डालीष्वन्त्यजासु च ।**
**सपिण्डापत्यदारेषु प्राणत्यागो विधीयते** । इति ।

पुनस्तत्रैव **क्रतुरपि**-

**रेतः सेकः स्वयोन्यासु गोषु शिष्याङ्गनासु च ।**
**सखिभार्यासुतस्त्रीषु गमनाद् गुरुतल्पगः** ॥ इति ।

अत्र कुमारीशब्दस्य कन्यात्वमर्थस्तयोर्नार्थान्तरत्वात् । यतो हि पूर्वपक्षिभिरेव "कन्या नार्यां कुमार्यां च" इति **हैमः**, "कन्या कुमारिकानार्योः" इति **मेदिनी** चेति पूर्वत्रोदाहृतमेव प्रमाणत्वेन ।

यत्तु- अनूढाया एव कन्यात्वपक्षप्राबल्याय पक्षान्तरस्वीकारे "कन्यायाः कनीन च" ति **पाणिनि**सूत्रस्य वैयर्थ्यमुद्भाव्य **सिद्धान्त-कौमुदीतत्त्वबोधिनीकार**योः पूर्वोत्तरपक्ष-रूपोल्लेखप्रदर्शनेन **सत्यवती-कुन्त्योः** कन्यात्वाऽविरोधनिदर्शनं स्वीकृतं, तत्रापि पुनरेवं प्रतिब्रूमः:- "शब्दानुशासनस्मृतेराचार्यस्य महर्षेर्भगवतः **पाणिने**र्देशकालविप्रकृष्टानामपि समस्तश्रुतिस्मृतीनां साक्षात्कर्तृत्वेनाऽ नुद्वाहपुमसम्प्रयोगाऽ रजोदर्शनसमष्टि-विशिष्टाया एव कन्यात्वं स्वीकुर्वद्भिर्**मनुयाज्ञवल्क्यादि**महर्षिभिः सह विसंवादाभावात् सर्वदा सर्वत्रैकमत्येनाऽनूढामात्रवाचकत्वं कन्याशब्दस्याऽ भि-प्रेतं नैवाऽ वश्यं भवेत् तादृशानां **मनुयाज्ञवल्क्यादीनामपि** तादृशेन

**पाणिनिना** च सह न तथाऽवश्यं भवेत् । अपितु तेषां पारस्परिकसार्वदिकसार्वत्रिकैकमत्यसद्भावसंरक्षणाय कन्यात्वाऽ प्रणाशजनका-ऽ नुद्वाह-पुमसम्प्रयोगाऽ रजोदर्शनसमष्टिविशिष्टत्वस्यैव कन्यात्वलक्षणाङ्गी-कर्तव्यतया कन्यात्वप्रणाश-जनकोद्वाहपुंसम्प्रयोगरजोदर्शनसमष्टिविशिष्ट-त्वस्याऽ कन्यात्वलक्षणाङ्गीकरणीयत्वेपि प्रत्येकत एवापि कन्यात्व-प्रणाशजनकेषु त्रिषु निमित्तेषु मध्ये ह्येकतमत एवोभयत एव वा कन्यात्वस्य साकल्येन प्रणाशस्वीकारे व्यष्टिपक्षस्वीकारस्याऽ नावश्यकत्वेन किञ्चिन्मात्र-नाश-स्वीकर्तव्यतयाऽ न्यतोऽ प्युभयत एकतमतो वा तस्य किञ्चित्सत्ताया अवश्यं वक्तुं शक्यत्वादथापि कन्यात्वकिञ्चिन्मात्रसत्तामत्या अपि कन्यात्वाऽप्रणाशजनका-ऽनुद्वाहपुमसम्प्रयोगाऽ रजोदर्शनसमष्टिवैशिष्टचाभावेन "कन्याभिन्नापि नाऽ कन्या, किन्तु "कन्यासदृशी" तद्भिन्नस्यैव तद्गतधर्मवतः सादृश्याद्" इति तादृश्यपि "कन्या"भवतीति कन्यासादृश्यविशिष्टार्थवाचकात् कन्याशब्दादपत्यार्थेऽ ण्प्रत्ययं स्मरतः **पाणिने**: "कन्यायाः कनीन चे" ति सूत्रवैयर्थ्योद्भावनमत्यन्तमयुक्तम् । नहि **पाणिनिना** शब्दानुशासकेना"ऽ नूढैव कन्ये"ति क्वचिदुक्तम् । शाब्दिकानां हि शब्दसाधुत्वमात्रवदर्थेऽपि तात्पर्याऽ दर्शनेन कन्यासादृश्यविशिष्टार्थवाचकस्य कन्याशब्दस्य विवक्षयापि सूत्रसार्थक्योपपत्तेः, सत्यप्यर्थे शब्दसाधुत्व-मात्रवत्तात्पर्ये वस्तुतोऽ र्थभेदाभावेन सूत्रसार्थक्याऽ नुपपत्त्यभावात्, किन्तु कन्याशब्दादपत्यार्थे "ऽ ण्"प्रत्ययं स्मरतः **पाणिने**: "कन्यायाः कनीन चे"ति सूत्रे पठितस्य कन्याशब्दस्य कोऽर्थ इतिविचारेऽ जातरजोदर्शनायाः पुमसम्प्रयुक्तायाश्चापत्यासम्भवेन तद्वैपरीत्य-संभवादनूढैव कन्येति तदभिप्रायानुमानेन स्वपक्षप्राबल्यचिकीर्षामात्रप्रदर्शनात् । अन्यथा "स्त्रीभ्यो ढक्" इत्यादावपि स्त्रीवाचकशब्दानां हि स्त्रीत्वविशिष्टार्थबोधकतया स्त्रीत्वविशिष्टार्थत्वस्य चाऽजातरजोदर्शन-पुमसम्प्रयुक्तास्वपि सत्त्वेन तादृशीनामपत्यासम्भवात्तद्वैपरीत्यसम्भवेन "जातरजोदर्शनपुंसम्प्रयुक्तात्वमेव स्त्रीत्व"मितिलक्षणाङ्गीकर्तव्यतयाऽजात-रजोदर्शनानां पुमसम्प्रयुक्तानां च स्त्रीत्वविशिष्टार्थबोधक-शब्दाभिधेयताभावेन स्त्रीत्वं न स्वीकर्तव्यं भवेत् । एवञ्च ताः काः ? न स्त्रियो, नैव वा पुरुषा, न च वा नपुंसका इति तत्र तत्र बहुष्वपि महाननर्थो भवेत् । तथा चैवं **पाणिने**: सूत्रस्य सङ्गत्यां सत्यामत एव **सिद्धान्तकौमुदीतत्त्वबोधिनीकारयो**रपि तादृशपूर्वोत्तरपक्षरूपोल्लेखः सिद्धान्तपक्षे संगत एव, अनूढाया हि रजोदर्शनेन, पुंसम्प्रयोगेण च कन्याभिन्नतायामपि कन्यासादृश्यसद्भावात् । अत एव हि

**ननु कन्या ह्यक्षतयोनिरिति तत्त्वबोधिनीकारेणाप्यक्षतयोन्या** अर्थादनुद्वाहपुम**सम्प्रयोगा**ऽ रजोदर्शनसमष्टिविशिष्टाया एव "हि" शब्देन कन्यात्वमन्तः**करणेन** निश्चित्य पूर्वपक्षरूपतस्तु तथाऽ**सम्भवमाशङ्क्या**ऽपि पुनरनूढाया **एवेत्यर्थात्** कन्यासादृश्यविशिष्टाया एवेत्येवशब्देन तथा समाहितमपि पूर्ववत्सङ्गतमेव । एतेन **सत्यवती-कुन्त्यो**रनुद्वाहावस्थायां व्यासकर्णजनने**न** कन्यात्वं विरुद्धमेव, कन्यात्वाभावेन कन्यासादृश्यमात्रसद्भावात् । अत एव च **कानीनस्य** कन्यासदृशीजातत्वान्निकृष्टत्वेनाऽ**दायादबान्धवत्व**मर्थाद् गोत्ररिक्थहराभाववत्त्वमविरुद्धम्,

**कानीनश्च सहोढश्च क्रीतः पौनर्भवस्तथा ।**

**स्वयन्दत्तश्च शौद्रश्च षडदायादबान्धवाः ॥९।१६०॥** इति **मनु**स्मरणात् ।

यच्च **कुमार्याः पाणिं गृह्णीयात्** इति **पारस्कर-गृह्यसूत्रभाष्येषु विश्वनाथहरिहरयो**रुक्तेः स्वपक्षमात्रे सङ्गमनं प्रदर्शितं, तत्रापि पुनरेवं प्रत्याचक्ष्महे-

तत्र हि तावद् **विश्वनाथहरिहराभ्या**मनूढात्वस्यैव पक्षस्य स्वीकारेण तथोक्तमिति कथनमात्रमपि लज्जाकरतरन्तेषाम्, **कुमार्या अनन्यपूर्विकाया** इति **विश्वनाथस्य**, **कुमार्या अनन्यपूर्विकायाः कन्याया** इति **हरिहरस्य** चोक्तिदर्शनात् । नह्यनन्यपूर्विकात्वमनूढात्वमात्रेण भवतीत्यपि तु पुमसम्प्रयोगेणापि भवतीति तैस्तदुक्तेः स्वपक्षमात्रे संगमनप्रदर्शनं स्वप्नेपि नैव चिन्तनीयम् । अत एव **हरिहरेण** तत्रैव **अनेन विंशतिप्रसूतायाः स्मृत्यन्तरविहितस्य पुनर्विवाहस्याऽनियम इच्छा चेत्करोती**ति चोक्तम् । तस्य चायमर्थः-

विंशतिप्रसूताया ह्यूढाया विंशतिप्रसवजन्याऽनिष्टनिवृत्त्यर्थकस्य पुनरुद्वाहस्य रागत एव प्राप्तावपि तत्रेतिकर्तव्यताया अप्राप्तेरुद्वाह-पुंसम्प्रयोगरजोदर्शनसमष्ट्या कन्यात्वप्रणाशात् कन्याकुमार्योश्च नार्थान्तरतयाऽनेनाऽप्राप्तौ तज्जन्याऽनिष्टनिवृत्तिकामाया एव पूर्वपतिनैव सह पुनरुद्वाहे "हीत्थ" मिति स्मृत्यन्तरेण तदुपदेशो विधीयते, न पुरुषान्तरेण, न चान्यथेति सा तथेच्छावती चेदेव करोतीति नानीदृशीति तस्यानियमाभाव इति, नतु कुमार्या अनन्यपूर्विकामात्रार्थतया विंशतिप्रसूतायास्त्वन्यपूर्विकात्वेन तद्द्वारा पुरुषान्तरपुनरुद्वाहनिषेधकस्यैतस्य शास्त्रस्य तद्विधायकस्मृत्यन्तरविरोधाद्वैकल्पिकत्वाङ्गीकरणीयतयेच्छाया अनियम इति । सत्यपि तथा

यथाकथञ्चित्तन्मते नैतेनापि तेषामभिप्रेतार्थसिद्धिः, विंशतिप्रसूताया अपि पुनरुद्वाहवैकल्पिकत्वसिद्ध्या कथन्नामाऽनूढाया एव कन्यात्वं स्वीकुर्वन्ति-इति-विंशतिप्रसूताया अपि कन्यात्वस्वीकर्तव्यत्वादर्थान्तरदोषादिमहानर्थापातस्तेषां भवेत् । किञ्च-अत एव तत्रैव **कर्काचार्यजयरामाभ्यामपि** "कुमारीग्रहणं विंशतिप्रसूताव्युदासार्थं; स्मर्यते हि विंशतिप्रसूतायाः पुनर्विवाहः" इत्युक्तम् । तथा तत्रैव-"कुमार्या अक्षतयोन्या विंशतिप्रसूताव्युदासार्थं कुमारीग्रहणं स्मर्यते हि तस्याः पुनर्विवाहः" इति, तथा पुनस्तत्रैव पदार्थक्रमे "अनन्यपूर्विका" मिति **याज्ञवल्क्य**वचनव्याख्यानावसरे-

"अनन्यपूर्विका"मित्यनेन- "मनोदत्ता, वाग्दत्ता, अग्निं परिगता, सप्तपदीं नीता, भुक्ता,गृहीतगर्भा, प्रसूता"चेति सप्त पुनर्भ्वो व्यावर्त्यन्ते" इति चोक्तवता **गदाधरेणा**ऽक्षतयोनित्वार्थप्रदर्शनपूर्वकं मनोदत्तादिसप्तपुनर्भ्वा व्यावर्तनं कृत्वा"ऽक्षतयोनि"पदेनाऽनुद्वाहपुमसम्प्रयोगाऽरजोदर्शनसमष्टि-विशिष्टाया एव कन्यात्वं स्वीकृतं सुतरामवगम्यते ।

अपिच वयं पुनरेवमभिदध्महे-"कुमार्याः पाणिं गृह्णीयात्" इत्यत्र कुत्सितो मारो यस्या इत्यर्थे समस्तादत एव प्रथमवयोवाचकात्कुमारशब्दाद् "वयसि प्रथमे" इतिङीप्प्रत्ययविधानतो व्युत्पन्नस्य कुमारीशब्दस्याऽ-नुद्वाहपुमसम्प्रयोगारजोदर्शनसमष्टिविशिष्टस्यैव स्त्रीरूपार्थस्य वाचकत्वं न त्वनुद्वाहमात्रविशिष्टस्य, पुमसम्प्रयोगमात्रविशिष्टस्य, रजोदर्शनाभावमात्र-विशिष्टस्य वाऽपीति तत्रभगवता सकलश्रुतिस्मृतिसाक्षात्कर्त्रा **पारस्करेणा**ऽ-भिप्रेतं निश्चिनुमः ।

कुत्सितमारविशिष्टात्वञ्चात्र "प्राणान्तबाधाजननपर्य्यन्तक्रमिकदुःखो-त्पादकत्वरूपावयवार्थानभिधायक-विकाररूपापरिणतात्मकसामुदायिकापरार्था-भिधायकमनसिजोत्पत्त्यधिकरणावस्थाविशेषवैशिष्ट्यम्" । तच्च- **स्थविराणा-मपि स्त्रीणां बाधते मैथुनो ज्वर** इत्युक्तिदर्शनाद्युवतिप्रभृत्यामनुद्वाहिताया-मपि न संभवतीत्यत एव तद्विशिष्टाया एवोद्वाहः कर्तव्यो भवतीति तादृश्येवाऽनूढा कुमारीपदवाच्या । अथाऽजातरजोदर्शनापि तादृश्येव भवति; मारविकारेषत्प्रादुर्भावादेव हि रजोदर्शनं जायते । मारविकारेषत्प्रादुर्भावोप-क्रमश्च पुंसम्प्रयोगविषयकव्यवहारश्रवणदर्शनमननोत्कण्ठादिना सम्भवति, नाऽन्यथेति सापि कुमारीपदाभिधेया । अथैवं पुमसम्प्रयुक्तापि तादृश्येव भवति; उद्वाहिताया अपि बालाया असञ्जातरजस्काया अनुत्पन्नमारविकाराया **गौरीमपि च रत्यर्थं गच्छेत्पुरुष आकुलः** इति स्मरणात् पुंसम्प्रयोगात

एव शनैः शनैर्मारविकारोत्पत्तेरिति, सापि कुमारीपदवाच्या । तस्मान्नानूढैव कुमारी भवितुमर्हति पुंसा सह सम्प्रयुक्तायां, जातरजस्कायाञ्च व्यभिचारात् । नापि वा पुमसम्प्रयुक्तैव कुमारी भवितुमर्हति, ऊढायां, जातरजस्कायाञ्च व्यभिचारात् । नच वाप्यजातरजस्कैव कुमारी भवितुमर्हतिं; पुंसम्प्रयुक्ताया-मूढायाञ्च व्यभिचारात् । एवन्न द्विविधैवापि कुमारी भवितुमर्हति; तदन्यत्रैकत्र व्यभिचारात् । अथोढापि या ह्यजातरजस्का पुमसम्प्रयुक्तैव बालविधवा चेदपि न सा कुमारी भवितुमर्हति; जातोद्वाहलभ्यपुंसम्प्रयोगसंकल्पजकिञ्चिन्मार-विकारोत्पन्नपूर्वात्वसंभवात् । एवन्नानुद्वाहिते अजातरजस्के पुमसम्प्रयुक्ते चापि मनोदत्तवाग्दत्ते कुमार्यौ भवितुमर्हतः, पित्रादिकर्तृकस्वकर्मकदाना-ऽन्यविवाहतादृशवार्ता-श्रवणमननाद्युभयजन्यपुंसम्प्रयोगसंकल्पजमारविकारेष-दुत्पत्तिसम्भवात्तादृश्याः । तथैवाऽजातरजस्के पुंमसम्प्रयुक्ते चाप्यग्निपरिगत-सप्तपदीनीते अर्धोद्वाहयुक्ते न कुमार्यौ भवितुमर्हतः; भाविपुंसम्प्रयोग-संकल्पजमारविकारकिञ्चिदुत्पत्तिसंम्भवात्, यतो ह्येतन्निबन्धनमेवाऽऽम्नायते प्रथमवयसः "कौमार" मिति नामधेयान्तरं, नानीदृशमिति, **तस्मान्नाऽ-नूढात्वमेव कन्यात्वमिति** ।

## पुमसम्प्रयुक्तानां कन्यात्वमिति वदतां खण्डनम्

पुमसम्प्रयुक्तात्वकन्यात्ववादिभिस्तु सहाऽस्माकं पुनरित्थं प्रतिवादः-

न तावत्किमपि क्वचिन्**नारदकात्यायनसुमन्तुभिरन्यैर्वा** कैरपि केनचिद्वचनेन पुमसम्प्रयुक्ताया एव कन्यात्वमिति लक्षणं कृतमिति वक्तुमपि शक्यते तैरपि, किन्तूढाया जातरजोदर्शनायाश्चापि पुमसम्प्रयुक्ताया एव कन्यापदप्रयोगद्वारा कन्यात्वं प्रतिपादितमित्येव तेषामपि प्रकथनम् । तत्र तावत्- **निर्णयसिन्धौ नारदेन**-

**उद्वाहितापि सा कन्या न चेत्संप्राप्तमैथुना ।**
**पुनः संस्कारमर्हेत यथा कन्या तथैव सा ॥**

इति वचनेनोढाया जातरजोदर्शनायाश्चापि पुमसम्प्रयुक्ताया एव कन्यापदप्रयोगद्वारा कन्यात्वं प्रतिपादितं कथं भवति ? तत्र तावत् "पुनः संस्कारमर्हेते"ति पुनः संस्कारार्हात्वस्मरणादेव सकृत् संस्कृतापीति ज्ञाप्यते, ततस्तथैवो"द्वाहितापी"त्यनेन 'यद्यपि मुख्या कन्याऽनूढैव, तथापि-उद्वाहमात्रेण क्षता नतु रजसापीति" ज्ञापितं भवत्येव । तथा च सकृत्संस्कृता स्त्री

"कन्यात्वप्रणाशजनकानामुद्वाहपुंसम्प्रयोगरजोदर्शनाना"मेकेनोद्वाहमात्रेण क्षता न तु रजसापीत्यत एवाऽ मुख्यापि सम्प्राप्तमैथुना नचेत्समस्त-लक्षणानाक्रान्तत्वेन कन्यात्वस्य कात्स्न्र्येनाऽप्रणाशेऽ पि-अर्थात्-"कन्यात्वाऽ-प्रणाशजनकानामनुद्वाहपुमसम्प्रयोगाऽरजोदर्शनानां" मध्ये "पुमसम्प्रयोगा-रजोदर्शनयोः सद्भावेनैकस्यैवाऽनुद्वाहस्याऽ भावेपि समस्तलक्षणाक्रान्तत्वा-भावात्कन्यात्वस्य किञ्चिन्मात्रावस्थित्या कन्याभिन्नापि कन्यासदृशी भवतीत्यत एव **यथा कन्या तथैव सा** इत्युक्तम्, तद्भिन्नस्यैव तद्गतधर्मवतः सादृश्यात् । अत एव तत्रैव **कात्यायनो**ऽपि- **वरो यद्यन्यजातीयः** इत्यत्र-**ऊढापि देया** इत्यपिशब्देनाऽ नूढाया एव मुख्यकन्यात्वं ज्ञापितमित्येतदपि पूर्वेणैव व्याख्यातं भवति । एवम्- **अपरार्के** तेनैव **पूर्वदत्ता तु या कन्या** इत्यत्र- **सकृत्संस्कृतापी**ति-अपिशब्देना ऽ नूढाया एव मुख्यकन्यात्वं ज्ञापितं भवतीतीदमपि पूर्वेणैव समानम् । तथा तत्रैव-**सुमन्तुना**- **कन्या कुत्सिता** इत्यत्र- परिणीताया अक्षतयोन्याः कुत्सितात्वादिना परित्यागस्मरणन्तु प्रथमतृतीयपक्षयोरपि संघटत एवेति पक्षत्रये संघटनात् स्वत एव सिद्धान्तपक्षे सुसंगतं, रजोदर्शनाभावेनाऽ प्यक्षतयोनित्वसंभवात्, तथाच पुमसम्प्रयोगेणैवा-ऽक्षतयोनित्वं, नत्वनुद्वाहेन रजोदर्शनाभावेन चेति **सुमन्तो**रन्तःकरण-सिद्धान्तमनुमिन्वद्भिस्तैः स्वयं दूरे पलायितव्यं भवत्येव ।

यत्तु "तत्र क्षता संस्कारात्प्रागेव पुरुषसंबन्धदूषिता, अक्षता पुनः संस्कारदूषिता" इति-**मिताक्षरा**कृतोल्लिखितमुदाहृत्य तदभिप्रायस्य स्वपक्ष-निश्चायकत्वसुशक्यताभिहिता, तत्रैवम्प्रत्युच्यते-

तत्र हि ताव**न्मिताक्षरा**कृता **क्षता**शब्दस्य **दूषिते**त्यर्थप्रदर्शनात् **क्षता**-- **दूषिता**शब्दयोर्नार्थान्तरत्व स्वीकृतमेव । ततश्च पुरुषसम्बन्धेन दूषितायाः क्षतात्वेन संस्कारेण दूषिताया अपि क्षतात्वेनैव भवितव्यत्वे पुनरक्षतारूपोऽ र्थ आर्थिक एव स्वीकर्तव्यो भवति, न शाब्दिकः । तथा चैवमर्थः- तत्र संस्कारात्प्रागेव पुरुषसंबन्धेन दूषिता क्षता, पुरुषसम्बन्धेनाऽ दूषितापि संस्कारेण दूषितार्थात् संस्कारेणैव क्षता, पुरुषसम्बन्धेन त्वक्षता भवतीति संस्कारदूषितायाः पुरूषसम्बन्धाऽदूषितात्व-द्वारेणाऽ क्षतात्वमुक्तमिति नैव विरोधः । यद्वा- **क्षते**त्यस्य कर्मार्थकक्तान्तत्वमेव **अक्षते**त्यस्य तु अविद्यमानं क्षतं पुरुषसम्बन्धद्वारा, रजोदर्शनद्वारा च यस्या इत्यर्थे- भावार्थकक्तान्तक्षतशब्दस्याऽ विद्यमानशब्देन सह **नञोऽस्त्यर्थानां**

**वाच्यो वाचोत्तरपदलोपः** इति वार्तिकेन समासे **विद्यमानशब्दस्य** लोपे च कृते परिनिष्ठितत्वेन, तत्र-**क्षता** पुरुषसम्बन्धदूषिता, **अक्षता** पुनः पुरुष-सम्बन्धेन, रजोदर्शनेन चाक्षतापि पुनः **"संस्कारदूषिता" इति स एवाऽ र्थः ।** तथाच-"एकतः-"क्षता"ऽ पि, अन्यतस्तु" अक्षता," एकतो"ऽ क्षतापि" अन्यतस्तु-"क्षता" भवतीत्युद्वाहतो, रजोदर्शनतश्चापि क्षतात्वसंभवान्मिताक्षरा-कृतस्तथोल्लेखः प्रथमतृतीयपक्षयोरपि संघटत एवेति पक्षत्रयेपि संघटनात्सिद्धान्तपक्षे सुसंगत एव भवति ।

यदपि **सिद्धान्तकौमुद्याम्** "कुमार्यां वयसी"ति **पाणिनेः** सूत्रे-उदाहृतस्य"वृद्धकुमारी"ति प्रयोगस्य पुंसा सहाऽ सम्प्रयोगमात्रप्रवृत्ति-निमित्तोपादानद्वारा साधुत्वं प्रदर्शयतो **भट्टोजीदीक्षितस्योप**पादनं संगमय्य पक्षान्तरे "वृद्धकुमारी"ति प्रयोगस्य . समासपुंवद्भावयोर्निर्विषयत्वनिर्देशेन कुमारीशब्दे परे पूर्वपदान्तोदात्तत्वविधायकस्य "कुमार्यां वयसी"तिसूत्रस्य, **भट्टोजीदीक्षित**कृतोपपादनस्य च वैयर्थ्यमुद्भाव्य स्वपक्षस्यैव तत्साधकत्व-समर्थनेन लोकेपि **वृद्धकुमारी-वृद्धकन्या** इत्यादिव्यवहारप्रसिद्धेस्तथा-किञ्चिज्जातीयवृद्धकन्यानां पुत्रवद्दायहरणस्य चापि संगमनं प्रदर्शितम्, तत्राप्येवं प्रतिब्रूमः:-

तत्र हि तावद् वयोरूपार्थे द्योत्ये कुमारीशब्दे परे पूर्वपदान्तोदात्तत्वविधायके "कुमार्यां वयसी" तिसूत्रेऽ कृतेपि वयोग्रहणे प्रथमवयोवाचित्वेनैव "वयसि प्रथमे" इतिङीव्विधानतः कुमारीशब्दस्य व्युत्पन्नतया तत एव तद्रूपार्थस्य द्योतनसंभवेन पुनर्वयोग्रहणसामर्थ्यात् पुमसम्प्रयोगात्मकवयोऽ न्तररूपार्थवदनुद्वाहाऽरजोदर्शनाधिकरणावस्थाविशेषो-भयात्मकवयोऽ न्तररूपार्थस्यापि विनिगमनाविरहेण त्रिविधस्यैव तादृशवयोऽ न्तरसमष्टिरूपार्थस्य ज्ञापनसंभवाद् गुणवद्वरालाभादिकारण-वशाद्यावज्जीवमनुद्वाहिताया, रोगविशेषान्तरग्रासवशाद्यावज्जीवमजातरजो-दर्शनायाः, स्वकीयप्राग्भवीयकर्मोत्पादितसंसाराऽ सारतातत्त्वबोधोद्भावितविषय-वैराग्यानुष्ठितनियमविशेषजन्यरजोवरोधाऽनुद्वाहपुमसम्प्रयोगवशादूर्ध्वरेतस्काया अत एव यावज्जीवं सनकबालखिल्यादिवत्कौमारब्रह्मचारिण्याश्चापि वार्धक्यसंभवेन तासां त्रिविधानामपि प्रथमवयोतिरिक्ताऽ नुद्वाहपुमसम्प्रयोग-रजोदर्शनाभावात्मकवयोन्तररूपस्य सद्भावाद् वृद्धकुमारीशब्दाभिधेयतया तादृशार्थवाचककुमारीशब्दस्य वृद्धाशब्देन सामानाधिकरण्यसद्भावेन विशेष्य-विशेषणभावसंभवाद् विशेषणसमासपुंवद्भावसविषयकत्वसत्तया कुमारीशब्दे

परे पूर्वपदान्तोदात्तत्वविधायकस्य "कुमार्यां वयसी"ति सूत्रस्य सार्थक्योपपत्तेरत एवापि लोके **वृद्धकुमारी, वृद्धकन्या** इत्यादिव्यवहारप्रसिद्धेस्तथा किञ्चिज्जातीयवृद्धकन्यानां पुत्रवद्दायहरणस्य च सङ्गतिसद्भावात् । पुंसा सहाऽ सम्प्रयोगमात्रप्रवृत्तिनिमित्तोपादानद्वारा **भट्टोजीदीक्षित**कृतोपपादनस्यापि "कन्यायाः कनीन चे"तिसूत्रव्याख्यानेऽ नूढाया एवाऽ पत्यमित्युक्तवतस्तस्याऽ नूढात्वपक्षेऽ पि सम्मतिदृष्टत्वात्कन्याकुमार्योर्नार्थान्तरत्वेनाऽ स्मदीयपक्षत्रय-समष्टिविशिष्टसिद्धान्तपक्षान्तर्गतत्वादिष्टापादकतयैव दोषाभावाद्-इति ।

तदेवम्- "**न पुमसम्प्रयुक्तात्वमेव कन्यात्वम्**" इति ।

## अजातरजोदर्शनात्वस्य कन्यात्वं वदतां खण्डनम्

अजातरजोदर्शनात्वस्य कन्यात्ववादिभिश्च सहाऽ स्माकं पुनरेवं विप्रतिवादः-

तत्र हि तावदजातरजोदर्शनात्वमेव कन्यात्वमिति क्वचित्केनचिल्लक्षणं कृतमिति तु तैरपि नैव शक्यं वक्तुम्, अपितु- "पुंसम्प्रयुक्ताया उद्वाहिताया अप्यजातरजोदर्शनाया एव रजोदर्शनाभावजन्यस्य कन्यात्वाऽ प्रणाशस्याऽ-भिप्रायेण-"सा चेदक्षतयोनिः स्या"दितिपुनःसंस्कारविधायकं मानवं वचनं समवलम्ब्य "उद्वाहात्प्रथमे शुचौ यदि वसेद्भर्तुर्गृहे कन्यका" इति निर्णयसिन्ध्वाद्युद्धृतज्योतिर्निबन्धवचनस्योपपत्तिसाधकतया तत्सुसङ्गतिप्रदर्श-कत्वेन स्वपक्षस्यैव मुख्यत्वम् इत्येव तेषामपि जल्पाकत्वम्" ।

तत्रापि हि तावत्-"सा चेदक्षतयोनिःस्याद्"इत्यस्य मानववचनस्य कोऽ र्थः कीदृशश्च स एवाऽ द्याऽ वधि तैर्विचारितो न वा ? किंखलु मुखमस्तीति दशहस्ता हरीतकीत्यपि वक्तुमुचितं भवेत्कदाचिद् । इदं हि वचनं तावदापातत एव पक्षद्वयेऽ पि व्यवस्थितमिति स्पष्टमेव । परमार्थतो विचारे तु पक्षत्रयव्यवस्थापनसंग्राहकमवश्यम् । तथाहि- पुनःसंस्कारस्मरणादेव हि- "उद्वाहितपूर्वे"ति, तथा-"गतप्रत्यागते"ति, "पौनर्भवेन भर्त्रे"ति च स्मरणाद्- "अनुद्वाहितपूर्वे"ति चोभयोरेवार्थयोः स्वतो ज्ञापनसंभव एव । तथा पुनः- "अक्षतयोनि"रित्यत्राऽ क्षतयोनित्वस्य रजोदर्शनजन्यत्ववत्पुंसम्प्रयोगजन्यत्वेनापि द्विधैव संभवः, तथैवं पुनः-"गतप्रत्यागतापि वा" इत्यत्र गतप्रत्यागता-त्वस्याऽ प्युद्वाहिताया उद्वाहकेन सह सम्प्रयोगतोऽ सम्प्रयोगतो वा निवर्तनेन क्षतयोनित्वाऽ क्षतयोनित्वयोरुभयोरेव संभवः,-तथा- अनुद्वाहिताया अपि येनकेनचित्पुंसा सह सम्प्रयोगतो निवर्तनेनाऽ पि क्षतयोनित्वसंभवः । तथा

च-एवंविधस्तस्याऽ र्थः संभवति, स यथा- पुनःसंस्कारस्मरणादेवोद्वाहितपूर्वेति-बोधनात्- सा-उद्वाहितपूर्वाऽ पि अक्षतयोनिः-उद्वाहकसम्प्रयोगतो, रजोदर्शनतश्चोभयत एवैकतो वाऽ प्यक्षतयोनिः स्याच्चेद्, वा-अथवा, गतप्रत्यागता-गतं गमनमुद्वाहकसम्प्रयोगस्ततः प्रत्यागता-पलाय्य निवृत्ताऽ पि उद्वाहक-सम्प्रयोगजन्यं योनिक्षतात्मकं दुःखं सोढुमशक्नुवती सती ततः पलायितेति यावत्, पत्युर्मरणादिना तत्सम्प्रयोगतो निवृत्ता वा, अर्थात्- संस्कारमात्रेण क्षतयोनिरपि पुंसम्प्रयोगरजोदर्शनाभ्यान्त्वक्षतयोनिः, संस्कारपुंसम्प्रयोगाभ्यां क्षतयोनिरपि रजोदर्शनेन त्वक्षतयोनिः, तथा "**गतप्रत्यागतापी**" त्यत्रापि-शब्दादनुद्वाहितापि, अक्षतयोनी रजोदर्शनतोऽ प्यक्षतयोनिःसती, गतप्रत्यागता-गता-उद्वाहात्पूर्वमेव पुरुषान्तरसम्प्रयोगं प्राप्ता चासौ- प्रत्यागता- पश्चात्ततो निवृत्ता, अर्थात्- संस्कारतो, रजोदर्शनतश्चाऽ क्षतयोनिरपि पुंसम्प्रयोगतस्तु क्षतयोनिः अर्थात्-ऊढाऽ नूढा वैकतः क्षतयोनिरपि तदितरद्वयतस्त्वक्षतयोनिः, ऊढा तु द्वाभ्यां क्षतयोनिरप्येकतस्त्वक्षतयोनिः,त्रिभिरेव सर्वात्मना ह्यक्षतयोनिरितियावत् । एतादृशी-ऊढा, पौनर्भवेन भर्त्रा कौमारेण सह, अनूढा तु पौनर्भवेन भर्त्रा भाविनोद्वाहकेन सह पुनःसंस्कारमर्हतीति । तथा च-कन्यात्वाऽ प्रणाशजनकाऽ नुद्वाहपुमसम्प्रयोगाऽ रजोदर्शनसमष्टिवैशिष्टच्चया-ऽ सत्त्वेन कन्यात्वाऽ सद्भावेपि समष्टचा व्यष्टचाऽ पि वा कन्यात्वप्रणाशजनकानामुद्वाहपुंसम्प्रयोगरजोदर्शनानामेकतमत उभयतो वा कन्यात्वस्य सर्वथा प्रणाशाभावेन किञ्चिदवस्थितिद्वारा कन्या-सादृश्यमात्रसद्भावमाश्रित्य तादृशीनां पौनर्भवेन भर्त्रा सह पुनः संस्कारं स्मरता **मनुना** नैकतम उभयो वा पक्षः स्वीकृतो भवेदिति कल्पयितुं शक्यम् । अपितु-पक्षत्रयमेव समवलम्बितमिति कल्पयितुं सुशकमेवेति कथङ्कारं स्वपक्षमात्रसमवलम्बनं तदङ्गीकृत्य शरणीकर्तव्यं तैरिति कथन्नाम-"उद्वाहात्प्रथमे शुचौ यदि वसेद्भर्तुर्गृहे कन्यका" इति निर्णयसिन्ध्वा-द्युद्धृतज्योतिर्निबन्धवचनस्योपपत्तिसाधकतया तत्सुसंगतिप्रदर्शकत्वं तदीयपक्षस्य भवेत् । किञ्च- "उद्वाहात्प्रथमे शुचौ यदि वसेद्भर्तुर्गृहे कन्यका" इत्यत्रत्यकन्यापदेन ह्यूढामात्रस्त्रीरूपार्थोऽ भिधीयते, ऊढायामपि कन्या-पदप्रयोगस्तु कन्यापदस्य नारीसामान्यवाचकत्वप्रसिद्ध्या तदेव प्रवृत्तिनिमित्त-मुपादाय समुपपद्यते । यतो ह्याभिधानिका अप्येवं पठन्ति- "कन्या कुमारिकानार्योः". इति **मेदिनी,** "कन्या नार्या कुमार्यां च" इति **हैम**श्चेति । अन्यथा- "उद्वाहात्प्रथमे शुचौ यदि वसेद्भर्तुर्गृहे कन्यका" इत्यत्र-"क्षये निजतनु"मित्यस्य कथंकथमपि सङ्गतिरेव न स्यात् ।

क्षयमासाऽऽगमनकालपर्य्यन्तं रजोदर्शनाऽवरोधाऽसम्भवेन सञ्जाते च रजोदर्शने कन्यात्वप्रणाशाद् वदतामेव व्याघातस्तेषाम्-इति ।

तस्माद्- "**नाजातरजोदर्शनात्वमेव कन्यात्वम्**" इति ।

## कन्यात्वसम्बन्धे स्वनिष्कर्ष:

तदेवम्- उद्वाहपुंसम्प्रयोगरजोदर्शनानां समष्ट्या एव कन्यात्वस्य साकल्येन प्रणाशजनकतावच्छेदकत्वाद् व्यष्टिमात्रस्य तु तदभावेन तस्य किञ्चिदवस्थितावपि तादृश्याः कन्यासादृश्यमात्रस्वीकर्तव्यतयोद्वाहपुंसम्प्रयोग-रजोदर्शनानां समष्टिवद्व्यष्ट्या अपि कन्यात्वप्रणाशजनकतावच्छेदकत्वा-वश्याङ्गीकरणीयत्वेनाऽनुद्वाहपुमसम्प्रयोगाऽरजोदर्शनानान्तु समष्टिवद् व्यष्ट्या अपि कन्यात्वाप्रणाशजनकतावच्छेदकत्वाङ्गीकर्तव्यत्वाभावाद्-अथ-किन्नाम कन्यात्वमित्याकाङ्क्षायास्तादवस्थ्यसद्भावे पुनर्वयन्त्वेवं-सिद्धान्तयाम:-

कन्यात्वं नाम- "अनूढात्वम्, पुमसम्प्रयुक्तात्वम्, अजातरजोदर्शना-त्वञ्चेत्येतत्त्रितयसमष्टिविशिष्टात्वमेव । तस्य च वाचकमसाधारणं पदमेक"मक्षतयोनित्व"मिति तेषान्त्रयाणामप्यर्थानां सामूहिकयौगपद्ये ह्यक्षतयोनिपदस्यैव वाचकत्वशक्तिसद्भावसन्दर्शनेन तस्य तथा त्रिविध-प्रवृत्तिनिमित्तसमष्टिसम्भवात् । तत्त्वञ्चाऽवयवार्थप्रकाशकप्रमाणप्रदर्शनपूर्वक-पदव्युत्पादनानन्तरमत्रैव यथावद्वक्ष्यतेऽतस्तदेवाऽऽरभ्यते-

तथा च- "**योनि: कारणे भगतोययो:**" इति **हैमा**भिधानाऽनुशासनबलाद"प्यक्षतयोनि"रित्यस्य-"क्षता-दूषिता योनि: कारणम् "मातापितृपितामहप्रपितामहज्येष्ठभ्रात्रादिकुलरूपम्", भाविवर्तमानभूतभर्तृपुत्रादि-कुलरूपम्, तथा-"ऽऽत्मा," "भग"श्चाप्युद्वाहपुंसम्प्रयोग-रजोदर्शनै: समस्तैर्यथासंभवं मिलितैर्व्यस्तैर्वापि प्रत्येकतो यया सा तथाविधा न भवतीत्येवमर्थे-"केने"ति करणाऽऽकाङ्क्षायाम् "अनुद्वाहपुमसम्प्रयोगाऽ-रजोदर्शनानां" समष्ट्यैवेतिकरणत्वेनान्वयकर्तव्यतया तदेवं व्युत्पत्तिविशेष-वशतो निष्पन्नोऽन्वर्थो यौगिको"ऽक्षतयोनि"शब्द: कन्यात्वा-ऽप्रणाशजनकाऽनुद्वाहपुमसम्प्रयोगाऽरजोदर्शनसमष्टिविशिष्टं स्त्रीरूप-मर्थमाचष्टे । तथाविधोऽपि "क्षतयोनि" शब्दस्तु "कन्यात्व-प्रणाशजनकानामुद्वाहपुंसम्प्रयोगरजोदर्शनानां" समष्ट्या व्यष्ट्या वा प्रत्येकतोपि विशिष्टं स्त्रीरूपमर्थमभिधत्ते । तथा चैतानेव "क्षतयोनि" शब्दप्रवृत्तिनिमित्तभूतानर्थानभिप्रेत्य स्मृतिकारा अप्येवं प्रतिपादयन्तितत्र तावद्-

**निर्णयसिन्धौ मरीचिः-**

**गौरीं ददन्नाकपृष्ठे वैकुण्ठं रोहिणीं ददन् ।**

**कन्यां प्रदन्ब्रह्मलोके रौरवन्तु रजस्वलाम् ॥** इति

**वालम्भट्यां पैठीनसिः-**

"यावन्नोद्भिद्येते स्तनौ तावद्देयाऽ थर्तुमती भवति, दाता प्रतिग्रहीता नरकमाप्नोति, पिता पितामहः प्रपितामहश्च विष्ठायां जायन्ते, तस्मान्नग्निका देया" ॥ इति ।

तथा **पारस्करगृह्यसूत्रगदाधरभाष्ये** च-**सर्वसंग्रहवाक्यकारिकायाम्**-

**प्रदानं प्रागृतोस्तस्या ऊर्ध्वं कुर्वन्सदोषभाक् ।**

**ज्येष्ठो भ्राता पिता माता दृष्ट्वा कन्यां रजस्वलाम् ॥**

**त्रयस्ते नरकं यान्ति स्वयमित्यब्रवीद्यमः ।**

**यस्तां विवाहयेत्कन्यां ब्राह्मणो मदमोहितः ॥**

**असंभाष्यो ह्यपाङ्क्तेयः स विप्रो वृषलीपतिः ।**

**वृषलीसंग्रहीता यो ब्राह्मणो मदमोहितः ॥**

**सततं सूतकं तस्य ब्रह्महत्या दिने दिने ।**

**पितुर्गेहे तु या कन्या रजः पश्यत्यसंस्कृता ॥**

**भ्रूणहत्या पितुस्तस्याः सा कन्या वृषली स्मृता ।**

**दद्याद्गुणवते कन्यां नग्निकां ब्रह्मचारिणीम् ।**

**अपि वा गुणहीनाय नोपरुन्ध्याद्रजस्वलाम् ॥** इति ।

तथा- ऽ **परार्के कात्यायनः-**

**पितुर्गेहे तु या कन्या रजः पश्यत्यसंस्कृता ।**

**भ्रूणहत्या पितुस्तस्याः सा कन्या वृषली स्मृता ॥**

**यस्तु तां वरयेत्कन्यां ब्राह्मणो ज्ञानदुर्बलः ।**

**अश्राद्धेयमपाङ्क्तेयं तं विद्याद्वृषलीपतिम् ॥** इति ।

तत्रैव- **संवर्तोऽपि**

**माता चैव पिता चैव ज्येष्ठो भ्राता तथैव च ।**

**त्रयस्ते नरकं यान्ति दृष्ट्वा कन्यां रजस्वलाम् ॥** इति

**मनुरपि-**

**पित्रे दद्यान्न शुल्कन्तु कन्यामृतुमतीं हरन् ।**

**स हि स्वाम्यादतिक्राम्येदृतूनां प्रतिरोधनात् ॥ ९।९३॥** इति

**याज्ञवल्क्यश्च-**

**अप्रयच्छन्समाप्नोति भ्रूणहत्यामृतावृतौ ॥१।६४॥** इति ।

पुन**र्निर्णयसिन्धौ संवर्त**:-

**निष्कृतिः स्यात्सुरापस्य हत्याया ब्रह्मवादिनाम् ।**

**वृषल्यभिप्रजातस्य निष्कृतिर्नोपपद्यते ॥**

**ब्राह्मणो वृषलीं गत्वा त्र्यहं भवति सूतकी ।**

**अथाऽस्यां गर्भमाधत्ते पतत्याशु न संशयः ॥** इति ।

ततश्चैवमादिवचननिचयैः "मनोदत्ता, वाग्दत्ता, अग्निं परिगता, सप्तपदीं नीता, "उद्वाहात्पूर्वम्- "जातरजोदर्शना, पुंसा सह सम्प्रयुक्ता, गृहीतगर्भा, प्रसूता," "उद्वाहादुत्तरम्- "कौमारेण भर्त्रा भर्त्रन्तरेण वा सह सम्प्रयुक्ताऽ जातरजोदर्शना, जातरजोदर्शनाऽ सम्प्राप्तमैथुना" चेत्येतासु दशविधासु, तथैवंविधास्वन्यास्वपि मध्ये **"मनोदत्तवाग्दत्तयोः"** कन्यानिष्ठस्वनिरूपितस्वत्वनिवर्तकपरस्वत्वोत्पादकरूपपित्रादिकर्तृकमनोवाग्दानाद्यात्मकोद्वाहद्वारा, **अग्निपरिगतसप्तपदीनीतयोः** पुनः कन्यानिष्ठस्वनिरूपितस्वत्वगोत्रोभयनिवर्तकवैवाहिकमन्त्रसंस्कारद्वारा, मातापितृपितामहप्रपितामहज्येष्ठभ्रात्रादिकुलरूपकारणस्य कन्यानिष्ठस्वनिरूपितस्वत्वगोत्रोभयनिवृत्तिरूपक्षतत्वेन "क्षतयोनित्वम्," तथोद्वाहात् पूर्वन्तन्मध्य एव वा- "जातरजोदर्शनायाः, पुंसा सह सम्प्रयुक्तायाः, जातरजोदर्शनाऽसम्प्राप्तमैथुनायाः, गृहीतगर्भायाः, प्रसूतायाः, "उद्वाहादुत्तरम्- कौमारेतरभर्तृसम्प्रयुक्ताऽ जातरजोदर्शनायाश्चेति षड्विधानामन्यासामप्येवंविधानां यथायथं रजोदर्शनद्वारा, पुंसम्प्रयोगद्वारा च मातापितृपितामहप्रपितामहज्येष्ठभ्रात्रादिकुलरूपस्य स्वनिरूपितकारणस्य, भाविनो वर्तमानस्य भूतस्य च भर्त्तुः स्वजन्यपुत्रनिरूपितकारणस्य, भाविनो वर्तमानस्य भूतस्य च पुत्रस्य तु स्वनिष्ठजननजन्यमातृत्वनिरूपितकारणस्य, स्वस्य पुनर्भाविवर्तमानभूतपुत्रनिरूपितकारणस्य च रौरवादिनरकभ्रूणहत्यास्वामित्वातिक्रमविष्ठोद्भववृषलीपतित्वसतताऽ शुचित्वपतितत्वब्रह्महत्याऽ संभाष्यत्वाऽपाङ्क्तेयत्वाऽश्राद्धेयत्वनिष्कृत्यभावादिनानाविधदोषभागित्वरूपक्षतत्वेन, तथा-"**भगस्या**"ऽ पि

पुंसम्प्रयोगद्वारा, रजोदर्शनद्वारा च शिश्नसंघर्ष-च्छेदरूपक्षतत्वेन च यथायथं क्षतयोनित्वम् । ततश्चैवमेता दशविधा एतादृश्योऽन्याश्चापीत्थं क्षतयोनयो भवन्तीति- ताः सर्वा अपि अकन्याः । तदितरा याः खलु मनो-वाग्दानाद्यग्निपरिगमनसप्तपदीनयनान्तादिसंस्कारात्मकोद्वाहेन, पुंसम्प्रयोगेण, रजोदर्शनेन चैतैः समस्तैरेव क्षतयोनयो न भवन्ति- इति ता एवा"ऽक्षतयोनयः," "कन्याश्च" । तथा चैवम्-

**उद्वाहपुंसम्प्रयोगरजोदर्शनसमष्टिव्यष्टिविशिष्टात्वं क्षतयोनित्वम्, अनुद्वाहपुमसम्प्रयोगाऽरजोदर्शनसमष्टिविशिष्टात्वमक्षतयोनित्वम्**

**इति- क्षतयोनित्वमकन्यात्वम्, अक्षतयोनित्वं कन्यात्वम्**

इतीमानि चत्वार्यपि लक्षणानि निरवद्यान्येव ।

एतावता हि मनोदत्तवाग्दत्तादीनां दशविधानामन्यासाञ्चेतादृशीनामुद्वाहपुंसम्प्रयोगरजोदर्शनसमष्टितः क्षतयोनित्वाभावेनाऽक्षतयोनित्वात् कन्यात्वमित्यापातभ्रमोऽपि निरस्तः, कन्यासादृश्यमात्रात्तासाम् । तथा कन्यासदृशीतत्पित्रादीनां पारस्परिकस्वस्वामिभावसम्बन्धस्य साकल्येन सद्भावसंभवोऽपि निरस्त एव;

**स हि स्वाम्यादतिक्राम्येदृतूनां प्रतिरोधनात् ॥९।९३॥** इति पूर्वोदाहृत**मनुवचन**विरोधपरिहाराय किञ्चिन्मात्रसत्ताव्यवस्थापनीयत्वात् । नन्वेवमपि-

**अक्षता च क्षता चैव पुनर्भूः संस्कृता पुनः**

इति **याज्ञवल्क्य**वचनविवरणे-

"या कृतविवाहा सती क्षतयोनिरक्षतयोनिर्वा कौमारेण भर्त्रा भर्त्रन्तरेण वा यथाविधि पुनरुह्यते सा पुनर्भूः"

इत्य**परार्क**ग्रन्थविरोधः; उद्वाहेनैव क्षतयोनेः पुमसम्प्रयोगाऽरजोदर्शनाभ्यामक्षतयोनित्वसंभवेन कन्यासादृश्यसद्भावेपि पुनः पुंसम्प्रयोग-रजोदर्शनाभ्यामपि क्षतयोनेस्तु कन्यात्वस्य कात्स्न्येंन प्रणाशेन कन्यासादृश्यमात्रस्याऽप्यभावादिति, तस्यापि-

"**या कृतविवाहा सती**" इत्यत्र "याऽकृतविवाहा सती" त्येवं पाक्षिकाऽकारप्रश्लेषसंभवेन- "याऽकृतविवाहा सती क्षतयोनिर्वा "या कृतविवाहा सत्यक्षतयोनि" रित्येवं द्विधान्वयेन व्याख्याने न कश्चिद्विरोधः । तथा च-

"याऽ कृतविवाहा सती क्षतयोनिरनुद्वाहावस्थायामेव रजोदर्शनेन, पुरुषान्तरसम्प्रयोगेण, द्विधैव वा क्षतयोनिर्भवति," "या च कृतविवाहा सत्यक्षतयोनिरुद्वाहिता सती रजोदर्शनाभावेन, कौमारेण भर्त्रा भर्त्रन्तरेण वा सहाऽ सम्प्रयोगेण च द्विधैवाऽ क्षतयोनिर्भवती"त्येवमर्थेनाऽपि ग्रन्थ-सङ्गतिसद्भावात्- इति सर्वं निरवद्यम् ।

इति कन्यात्वमीमांसा ।

# अथोद्वाहसमयविचारः

तदित्थं कन्यात्वे मीमांसितेऽथ तद्विशिष्टानामुद्वाहसमयो यथावद् मीमांस्यते-

तत्र खलु तावत्पूर्वत्रैव पूर्वोत्तरपक्षेषूदाहृतवचनैरुद्वाहपुंसम्प्रयोग-रजोदर्शनानां समष्टिवद् व्यष्टिमात्रेणापि कन्यात्वप्रणाशस्वीकर्तव्यत्वादनूढायाः, पुमसम्प्रयुक्तायाश्चापि रजोदर्शनमात्रेण कन्यात्वप्रणाशावश्यम्भावेन रजोदर्शनादर्वाचीन एव तत्करणकालो निश्चेतव्यो भवति । अत एव **निर्णयसिन्धौ यमः** स्मरति-

"**तस्मादुद्वाहयेत्कन्यां यावन्नर्तुमती भवेत्**" इति ।

तत्रापि रजोदर्शनाऽधिकरणकालश्च कतम इत्यपेक्षायामनूढायाः पुमसम्प्रयुक्ताया गर्भतः प्राप्तद्वादशवर्षाया जन्मतस्तु व्यतीतदशमवर्षायाः स्त्रिया रजोदर्शनात्प्राक् कन्यात्वं स्वीकृत्य तदूर्ध्वं रजस्वलात्वं प्रतिपादयन्ति- **मुनयो, निबन्धकाराः, शिष्टाश्च**; तद्यथा-

तावद्- **निर्णयसिन्धौ गर्गः, पारस्करगृह्यसूत्रगदाधरभाष्ये-संग्रहवाक्यकारिकायाम्, गोत्रप्रवरनिर्णयेऽभिनवमाधवीये** च- स्मृत्यन्तरवचनमपि-

**अष्टवर्षा भवेद् गौरी नववर्षा तु रोहिणी ।**
**दशवर्षा भवेत्कन्या, अत ऊर्ध्वं रजस्वला** ॥ इति ।

अत एव पुनस्तत्रैवाऽ**भिनवमाधवीये**-जन्मतो व्यतीतदशमवर्षे गर्भतस्तु प्राप्तद्वादशवर्षे रजोदर्शनमभिधाय जन्मवर्षादारभ्य रजोदर्शनात् पूर्वं कन्यात्वप्रतिपादकं स्मृत्यन्तरवचनमुदाहृतं सङ्गच्छते, यथा-

"**प्राप्ते तु द्वादशे वर्षे रजः स्त्रीणां प्रवर्तते ।**
**आरभ्य जन्मवर्षात् प्राग्(रजोदर्शात्तु कन्यका ॥**
**विवाहार्हा भवेदूर्ध्वं गान्धर्वैकाधिकारिणी**" । इति ।

अत एव हि जन्मतो व्यतीतदशमवर्षपर्यन्तं प्राप्तैकादशवर्षपर्यन्तं; गर्भतस्तु प्राप्तद्वादशवर्षपर्यन्तं पुमसम्प्रयुक्ताया अप्यनूढायाः पितृगृहनिवासिन्या रजोदर्शनसंभवेन तत्पितुर्ब्रह्महत्यां, तस्याश्च स्वयंवरात्वं प्रतिपादयति **निर्णयसिन्धौ यमो** यथा-

**कन्या द्वादशवर्षाणि याऽ प्रदत्ता गृहे वसेत् ।**

**ब्रह्महत्या पितुस्तस्याः सा कन्या वरयेद्वरम् ॥** इति ।

ननु ! "अष्टवर्षे" त्यादिवचनेनाऽष्टवर्षाया गौरीत्वं, नववर्षाया रोहिणीत्वं, दशवर्षायाः कन्यात्वं प्रदर्शितम् । एवं **पारस्कर-गृह्यसूत्रगदाधरभाष्ये, संग्रहवाक्यकारिकायान्तु-**

"**दशमे नग्निका वा स्यात्**" इति,

अन्यत्र च-**भविष्यपुराणे-**

"**नग्निकां दशवर्षाम्**"

इतिवचनाद् दशवर्षाया नग्निकात्वं प्रतिपादितम् । किञ्च- "अष्टवर्षा भवेद् गौरी" त्यादौ- "अष्टौ वर्षाणि प्राप्तानि व्यतीतानि वा यस्या इत्येवं व्युत्पादनेनोभयार्थसंभवात् प्राप्ताष्टमवर्षायाः प्राप्तनवमवर्षायाश्च "**गौरीत्वम्**" एवम्- "**नववर्षाणि प्राप्तानि व्यतीतानि वा यस्या**" इत्येवं **दशवर्षाणि प्राप्तानि व्यतीतानि वा यस्या**" इत्येवं व्युत्पत्त्योभयार्थसंभवात् प्राप्तनवमवर्षायाः प्राप्तदशमवर्षायाश्च रोहिणीत्वम्, प्राप्तदशमवर्षायाः प्राप्तैकादशवर्षायाश्च "**कन्यात्वं,**" तथा- "**नग्निकात्वं**" च प्रतिपादितानि भवन्तीति तथा प्रतिपादिकाभिः स्मृतिभिर्जन्मवर्षत आरभ्य रजोदर्शनात्प्राक् कन्यात्वप्रतिपादिकायाः स्मृतेः परस्परमेकवाक्यत्वसंभवविरोधो भवेत्, तथा च-

**उत्कृष्टायाऽभिरूपाय वराय सदृशाय च ।**

**अप्राप्तामपि तां कन्यां तस्मै दद्याद्यथाविधि ॥ ९।८८॥**

**प्रयच्छेन्नग्निकां कन्यामृतुकालभयान्वितः ।**

**ऋतुमत्यां हि तिष्ठन्त्यामेनो दातारमृच्छति ॥ ९।८९॥**

इत्यादि**मन्वादि**वचनेष्वपि प्राप्तदशमवर्षायाः प्राप्तैकादशवर्षायाश्च कन्यात्वाङ्गीकर्तव्यतया प्राप्ताष्टमवर्षायाः प्राप्तनवमवर्षायाश्च **गौरीत्वेन**, प्राप्तनवमवर्षायाः प्राप्तदशमवर्षायाश्च **रोहिणीत्वेन** तासां पुनः कन्यात्वाभावेन दोषावहत्वाद्-

**गौरीं ददन्नाकपृष्ठे वैकुण्ठं रोहिणीं ददन् ।**

**कन्यां प्रदन्ब्रह्मलोके रौरवन्तु रजस्वलाम् ॥**

इति **निर्णयसिन्ध्वादिषु मरीच्यादिवचनम्,**

तथा तत्रैव-

**विवाहयेदष्टवर्षामेवं धर्मो न हीयते ॥**

इति**दक्षवचनम्**, तथा-

**सप्तसंवत्सरादूर्ध्वं विवाहः सार्ववर्णिकः ।**

**कन्यायाः शस्यते राजन्नन्यथा धर्मगर्हितः ॥**

इति **पारस्करगृह्यसूत्रगदाधरभाष्ये- यमवचनं** चेत्येवमादीनि वचनान्तराण्यपि विरुध्येरन् । न च-

**आरभ्य जन्मवर्षात्प्राग्रजोदर्शात्तु कन्यका ॥**

इत्य**भिनवमाधवीयं वचनं** निर्मूलमिति वाच्यम्, अनुद्वाहपुमसम्प्रयोगाऽरजोदर्शनसमष्टिविशिष्टायाः कन्यात्वाऽवश्यसद्भावाद्,अत एव-

**षडब्दमध्ये नोद्वाह्या कन्या वर्षद्वयं यतः ।**

**सोमो भुङ्क्ते ततस्तद्वद् गन्धर्वश्च तथाऽनलः ॥**

इति **पारस्करगृह्यसूत्रगदाधरभाष्ये, निर्णयसिन्धवादौ** च, **ज्योतिर्निबन्धे**- स्मृत्यन्तरवचनेनाऽपि जन्मवर्षत एव कन्यात्वप्रतिपादनाच्च । एवञ्च जन्मवर्षत आरभ्याऽनुद्वाहपुमसम्प्रयोगारजोदर्शनसमष्टिसद्भावपर्यन्तं स्वत एव कन्यात्वेऽवस्थिते पुनः- **अष्टवर्षा भवेद्गौरी**त्यादिना **गौरीत्व-रोहिणीत्व**रूपनामान्तरप्रतिपादनं, **कन्यात्व**प्रदर्शनञ्चाऽष्टवर्षाया अप्राप्तान्तर्रजस्कात्वज्ञापनार्थम्, नववर्षायाः प्राप्तान्तर्रजस्कात्वबोधनार्थम्, दशवर्षायाः स्त्रीत्वबोधकाऽऽकारविशेषात्मकव्यञ्जनाऽनुत्पत्तिसूचनार्थम्, एवं दशवर्षायाः पुनर्नग्निकात्वप्रतिपादनञ्चापि कुचहीनात्वज्ञापनार्थमित्यन्वर्थकान्येवैतानि नामानि । यतः खलु- अष्टवर्षाया अप्राप्तान्तर्रजस्कतया गौराङ्गीत्वेन **गौरी**तिनामान्तरम्, नववर्षायास्तु प्राप्तान्तर्रजस्कतया रोहिताङ्गीत्वेन **रोहिणी**तिनामान्तरम्, दशवर्षायाः पुनः कुचहीनात्वेन **नग्निके**तिनामान्तरम्, स्त्रीत्वबोधकाऽऽकारविशेषात्मकव्यञ्जनराहित्येन **कन्ये**ति नाम च । अर्थादितदुक्तं भवति यावत्स्त्रीचिह्नं नोत्पद्यते, तावत्पूर्वं विनोपस्थं स्त्रिया अपि स्त्रीत्वेन नावधारणं भवतीत्यर्थात्पुंवद्भातीति विनोपस्थं स्त्रीत्वबोधकाकार-विशेषात्मकव्यञ्जन-राहित्यात्तादृश्याः "**कन्ये**"तिनाम, तथा यावत्कुचौ नोद्भिद्येते तावत्पूर्वं विनोपस्थं कुचोद्गमस्थानभूतहृत्पार्श्वयोर्निर्वस्त्रापि निस्त्रपैव भवतीति "**नग्निके**"ति तस्या अवस्थाविशेषचिन्हबोधकं नामान्तरमपि भवतीति तदभिप्राय इति नैकवाक्यत्वसम्भवविरोधः ।

अत एवाऽयमेवाऽर्थ उक्तो **गृह्यसंग्रहे**, यथा-

**अप्राप्तरजसा गौरी प्राप्ते रजसि रोहिणी ।**
**अव्यञ्जिता भवेत्कन्या कुचहीना तु नग्निका ॥**
**व्यञ्जनैस्तु समुत्पन्नैः सोमो भुञ्जीत कन्यकाम् ।**
**पयोधरैस्तु गन्धर्वा रजसाऽग्निः प्रकीर्तितः ॥**
**तस्मादव्यञ्जनोपेतामरजामपयोधराम् ।**
**अभुक्ता चैव सोमाद्यैः कन्यका तु प्रशस्यते ॥** इति ।

अर्थादितदुक्तं भवति- सोमगन्धर्वाग्नीनामुपभोगद्वारा स्वत्वसद्भावोत्पत्तेः प्रागेव स्त्रीणामुद्वाहो युक्तः, अन्यथा जन्मत एवारभ्य सार्धवर्षसप्तकं यावदिव व्यञ्जनाद्युत्पत्तिसमकालमेव पुनरपि सोमादय एव क्रमेणोपभुञ्जीरन्नित्यभिप्राय इति ।

यत्तु- अस्य **गृह्यसंग्रहवचनस्य-सोमः प्रथमो विविदे** इत्यादिवक्ष्यमाणश्रुतिविरोधादुपेक्ष्यत्वं केचिद्वदेयुः, तत्रैवं प्रतिवक्ष्यामः- कथं खल्वस्य संग्रहवचनस्य श्रुतिविरोधः ? विरोधो ह्येकविषयक एव, नतु भिन्नविषयकोपि भवतीति श्रुतिर्हि जन्मत एवाऽऽरभ्य क्रमेण सार्धवर्षसप्तकं यावद्विषयीकरोति । एतत्तु स्मृतिवचनं सार्धवर्षसप्तकादूर्ध्वमनूढाया व्यञ्जनोत्पत्तिपयोधरोद्गमरजोदर्शनसमकालप्रभृत्येव विषयीकरोति । तत्कथ-मनयोर्मिथो विरोधः ? अत एव- व्यञ्जनोत्पत्तिपयोधरोद्गमरजोदर्शनानां प्रत्येकतः प्रागेवोद्वहेदुद्वाहयेद्, अन्यथा- "तदुत्पत्तिसमकालमेव पूर्ववत्पुनरपि सोमो भुञ्जीत, गन्धर्वा भुञ्जीरन्, अग्निः प्रकीर्तितो भवेदुपभोगे." इत्यर्थस्तस्य स्पष्ट एवेति श्रुतिविरोधाभावादुपेक्ष्यत्ववादस्यैवोपेक्ष्यत्वम्- इति ।

एवं हि सति- **अष्टवर्षा भवेद् गौरी**त्यादिवचनस्य **गौरीं ददन्नाकपृष्ठे** इत्याद्युत्तरवचनेनाऽप्येकवाक्यत्वं सम्भवत्येव । अर्थाद्- अष्टवर्षायाः कन्यायाः प्रदानेन स्वर्गप्राप्तिः फलम्, नववर्षायाः कन्यायाः प्रदानेन वैकुण्ठप्राप्तिः फलम्, दशवर्षायाः कन्यायाः प्रदानेन ब्रह्मलोकप्राप्तिः फलम्- इति फलस्तुतिः, अत ऊर्ध्वं रजोदर्शनसंभवेन रजस्वला चेत्तस्याः प्रदानेन रौरवनरकप्राप्तिः फलम्- इति निन्दाश्रुतिश्चोपपद्येते । एतच्चाऽनन्तरमेव पुनरपि प्रपञ्चयिष्यते । अत एव- अष्टवर्षाया अपि कन्यात्वं प्रतिपादितमन्यत्र- यथा-**निर्णयसिन्धौ संवर्तः- विवाहस्त्वष्टवर्षायाः कन्यायाः शस्यते बुधैः** ॥ इति । ननु चा"ऽ**ष्टवर्षा भवेद् गौरी**"त्यादौ- "**अष्टौ वर्षाणि गर्भतो जन्मतो वा प्राप्तानि व्यतीतानि वा यस्या**" इत्येवं व्युत्पत्त्या चतुर्धार्थसम्भवेन तत्र च विनिगमना-

विरहाच्चतुर्विधानामेवाऽर्थानामभ्युपगन्तव्यत्वमिति चेत्सत्यम्, इष्टापत्तेः, तथा चैवमभ्युपगमे ह्येवं पर्यवस्यति- तद्यथा-

"गर्भतः प्राप्ताष्टमवर्षा, व्यतीतसप्तमवर्षा च जन्मतस्तु सैव प्राप्तसप्तमवर्षा, व्यतीतषष्ठवर्षा चेति चतुर्विधापि जन्मतः षष्ठवर्षोर्ध्वात्वेनैकैव प्रथमा (१), गर्भतो व्यतीताष्टमवर्षा, प्राप्तनवमवर्षा च जन्मतस्तु सैव प्राप्ताष्टमवर्षा, व्यतीतसप्तमवर्षा चेति चतुर्विधा, तथा- जन्मतः प्राप्ताष्टमवर्षा, व्यतीतसप्तमवर्षा च गर्भतस्तु सैव प्राप्तनवमवर्षा व्यतीताष्टमवर्षा चेत्यपरा चतुर्विधा चेत्युभयतोष्टविधाऽपि जन्मतः सप्तमवर्षोर्ध्वात्वेनैकैव द्वितीयाऽपि (२), जन्मतो व्यतीताष्टमवर्षा, प्राप्तनवमवर्षा च गर्भतस्तु सैव प्राप्तदशमवर्षा, व्यतीतनवमवर्षा चेति चतुर्विधापि जन्मतोऽष्टमवर्षोर्ध्वात्वेनैकैव तृतीयाऽपि (३) चेति जन्मतः षष्ठवर्षोर्ध्वानां नवमवर्षाभ्यन्तराणां गर्भतस्तु तासामेव प्राप्तदशमवर्षाणां त्रिविधानामप्यष्टवर्षात्वमविरुद्धम् । (१)

एवम् - गर्भतः प्राप्तनवमवर्षा, व्यतीताष्टमवर्षा च जन्मतस्तु सैव प्राप्ताष्टमवर्षा, व्यतीतसप्तमवर्षा चेति चतुर्विधाऽपि जन्मतः सप्तमवर्षोर्ध्वात्वेनैकैव प्रथमा (१), गर्भतो व्यतीतनवमवर्षा, प्राप्तदशमवर्षा च जन्मतस्तु सैव प्राप्तनवमवर्षा, व्यतीताष्टमवर्षा चेति चतुर्विधा, तथा- जन्मतः प्राप्तनवमवर्षा, व्यतीताष्टमवर्षा च गर्भतस्तु सैव प्राप्तदशमवर्षा, व्यतीतनवमवर्षा चेत्यपरा चतुर्विधा चेत्युभयतोऽष्टविधाऽपि जन्मतोऽष्टमवर्षोर्ध्वात्वेनैकैव द्वितीयाऽपि (२), जन्मतो व्यतीतनवमवर्षा, प्राप्तदशमवर्षा च, गर्भतस्तु सैव प्राप्तैकादशवर्षा, व्यतीतदशमवर्षा चेति चतुर्विधापि जन्मतो नवमवर्षोर्ध्वात्वेनैकैव तृतीयापि (३), इति जन्मतः सप्तमवर्षोर्ध्वानां दशमवर्षाभ्यन्तराणां गर्भतस्तु तासामेव प्राप्तैकादशवर्षाणां त्रिविधानामपि नववर्षात्वमविरुद्धम् (२),

एवम्- गर्भतः प्राप्तदशमवर्षा, व्यतीतनवमवर्षा च जन्मतस्तु सैव प्राप्तनवमवर्षा, व्यतीताष्टमवर्षा चेति चतुर्विधापि जन्मतोऽष्टमवर्षोर्ध्वात्वेनैकैव प्रथमा (१), गर्भतो व्यतीतदशमवर्षा, प्राप्तैकादशवर्षा च, जन्मतस्तु सैव प्राप्तदशमवर्षा, व्यतीतनवमवर्षा चेति चतुर्विधा, तथा- जन्मतः प्राप्तदशमवर्षा, व्यतीतनवमवर्षा च गर्भतस्तु सैव प्राप्तैकादशवर्षा, व्यतीतदशमवर्षा चेत्यपरा चतुर्विधा चेत्युभयतोऽष्टविधापि जन्मतो नवमवर्षोर्ध्वात्वेनैकैव द्वितीयापि (२), जन्मतो व्यतीतदशमवर्षा, प्राप्तैकादशवर्षा च गर्भतस्तु सैव प्राप्तद्वादशवर्षा,

व्यतीतैकादशवर्षा चेति चतुर्विधापि जन्मतोष्टमवर्षोर्ध्वानामेकादशवर्षाभ्यन्तराणां, गर्भतस्तु तासामेव प्राप्तद्वादशवर्षाणां त्रिविधानामपि दशवर्षात्वमविरुद्धम्। (३)

**इत्थं खलु** जन्मतः षष्ठवर्षोर्ध्वानां **नवमवर्षाभ्यन्तराणां** गर्भतस्तु **प्राप्तद्वादशवर्षाणां** त्रिविधानामपि **स्त्रीणां** जन्मत एव **कन्यात्वे सुस्थितेऽप्यन्तर्रजस्कत्वाभावेन गौराङ्गीतया गौरीत्यपरमन्वर्थन्नाम** । तथा-जन्मतः सप्तमवर्षोर्ध्वानां दशमवर्षाभ्यन्तराणां गर्भतस्तु प्राप्तैकादशवर्षाणां त्रिविधानामपि स्त्रीणां जन्मत एव कन्यात्वे सुस्थितेऽप्यन्तर्रजस्कतया रोहिताङ्गीत्वे रोहिणीत्यपरमन्वर्थमेव नाम ।

तथैव जन्मतोऽष्टमवर्षोर्ध्वानामेकादशवर्षाभ्यन्तराणां गर्भतस्तु प्राप्तद्वादशवर्षाणां त्रिविधानामपि स्त्रीणां जन्मत एव कन्यात्वे सुस्थितेऽपि **रजोदर्शनाभावेन विनोपस्थं** स्त्रीत्वव्यञ्जकाऽऽकारविशेषात्मकचिह्नानुत्पत्त्या च कन्येति तन्नाम्न एवाऽनुवादः, कुचोद्गमाभावेन नग्निकेति चापरमन्वर्थनामाऽपीति । एवञ्च हि जन्मतः षष्ठवर्षोर्ध्वा एकादशवर्षाभ्यन्तरा गर्भतस्तु प्राप्तद्वादशवर्षाः क्रमेण **गौरी, रोहिणी, नग्निके**ति त्रिविधाऽन्वर्थनामान्तरयुक्ताः संकलिता नवविधाः स्त्रियः "**कन्या**" एव भवन्तीत्युक्तेनैव प्रकारेण जन्मतः षष्ठवर्षोर्ध्वानामेकादशवर्षाभ्यन्तराणां गर्भतस्तु प्राप्तद्वादशवर्षाणां नवविधानामपि स्त्रीणां जन्मत एव कन्यात्वनग्निकात्वयोरवस्थितावपि प्रथमत्रिविधानां तासामन्तर्रजस्कताभावेन विशेषतो गौराङ्गीतया गौरीत्यन्वर्थनामान्तरेणापि व्यवहारः सुसङ्गच्छत एव । तथा जन्मतः सप्तमवर्षोर्ध्वानां नवमवर्षाभ्यन्तराणां गर्भतस्तु प्राप्तदशमवर्षाणां द्वितीयत्रिविधानामपि स्त्रीणां जन्मत एव कन्यात्वनग्निकात्वयोरवस्थानेऽपि विशेषतोऽन्तर्रजस्कात्वेन रोहिताङ्गीतया रोहिणीत्यपराऽन्वर्थनाम्नापि व्यवहारः सुसङ्गच्छत एव । तथैव जन्मतोऽष्टमवर्षोर्ध्वानामेकादशवर्षाभ्यन्तराणां गर्भतस्तु प्राप्तद्वादशवर्षाणां तृतीयत्रिविधानामपि स्त्रीणां विनोपस्थं स्त्रीत्वव्यञ्जकाऽऽकारविशेषाऽनुत्पत्त्या कुचोद्गमाभावेन च तावत्कालपर्यन्तं कन्यात्वनग्निकात्वे एवेत्यन्वर्थनामानुवादव्यवहारस्तावन्तमेव कालं कन्यात्वनग्निकात्वे न तदूर्ध्वमपि, क्रमेण स्त्रीत्वव्यञ्जकाऽऽकार-विशेषोत्पत्तिकुचोद्भेदरजोदर्शनानां प्राप्तकालत्वादित्येवमुभयविधनियमप्रदर्शनार्थः । अत एव- **गोत्रप्रवरनिर्णये-भिनवमाधवीये-**

**अष्टवर्षा भवेत्कन्या नववर्षा तु रोहिणी ।**
**दशवर्षा भवेद् गौरी, अत ऊर्ध्वं रजस्वला ॥**

इति पाठान्तरवचनेऽप्यष्टवर्षा जन्मतो व्यतीताऽष्टमवर्षा, गर्भतस्तु प्राप्तद्वादशवर्षा च भवत्येव, तथा- दशवर्षा गर्भतः प्राप्तदशमवर्षा, जन्मतस्तु व्यतीताष्टमवर्षा च भवत्येवेत्यष्टवर्षायाः कन्यात्वं, दशवर्षाया गौरीत्वञ्च द्वयमप्यविरुद्धमेव । एवमेवैतादृशवचनेष्वन्यत्रापि व्यवस्थापनेन न काचिद-सङ्गतिरिति । अत एव च- **अत ऊर्ध्वं रजस्वला** इति रजोदर्शनसंभवोऽपि प्रदर्शितः । एतेन- सोमगन्धर्वाऽग्नीनां षड्वर्षपर्यन्तमुपभोगद्वारा स्वत्व-सद्भावात्तदूर्ध्वमर्थाद् द्विसप्ततितममासादूर्ध्वं कन्यानां विवाहकालं वदन्ती किंवदन्ती परास्ता । अत एव- जन्मदिनत एवाऽऽरभ्य त्रिंशन्मासानुक्रमेण सार्धवर्षसप्तकं यावत्सोमगन्धर्वाऽग्नीनामुपभोगद्वारा स्वत्वसद्भावव्याख्यान-स्यापि **पारस्कर-गृह्यसूत्रभाष्येषु** स्पष्टोल्लेखः सुतरां सङ्गच्छते; नवतितमादेव मासादूर्ध्वं तत्कालत्वात् । तथा चैवंस्थिते- "**दशमे नग्निका वा स्याद्**" इतिवचनम्, तथा- "**नग्निकां दशवर्षाम्**" इति **भविष्यपुराण**वचनञ्चाऽपि व्याख्याते भवतः । अत एव नग्नैव-नग्निका तत्त्वञ्च विनोपस्थं निर्वस्त्रयापि भाव्यत्वम्, स्तनोद्भेदाभावात् ।

"यावन्नोद्भिद्येते स्तनौ तावद्देयाऽथर्तुमती भवति दाता प्रतिग्रहीता नरकमाप्नोति, पिता पितामहः प्रपितामहश्च विष्ठायां जायन्ते; तस्मान्नग्निका देया" । इति **बालम्भटयां मिताक्षराव्याख्यायां पैठीनसिस्मरणात्** । अत एव- **कुचहीना तु नग्निकेति गृह्यसंग्रह**वचनमपि सुसङ्गच्छते, अर्थादितदुक्तं भवति यावत्कुचौ नोद्भिद्येते तावत्पूर्वं विनोपस्थं निर्वस्त्रापि निस्त्रपैव भवतीति नग्नैव नग्निकेत्यन्वर्थन्नाम, कुचोद्भेदादूर्ध्वन्तु रजसोऽपि दर्शनसंभवात् । अत एव- "**यावन्नोद्भिद्येते स्तनौ तावद्देयाऽथर्तुमती भवती**"ति पूर्वोदाहृत**पैठीनसि**वचने स्तनोद्भेदरजोदर्शनयोः पौर्वापरी-भावोऽप्यानन्तर्य्यबोधकेना"ऽथ"शब्देन सूचितः । एतेनैतदपि नियमितुं शक्यम्- "स्तनयोः स्पष्टोद्भेदादुत्तरस्यैव रजोदर्शनकालत्वमिति । तथा च रजोदर्शनकालस्यानियतत्वेऽपि स्तनयोः स्पष्टोद्भेदस्य तु कालबाहुल्या-त्तदीषदुद्भेदारम्भसमकालस्य लक्षणीयत्वेन तदुत्तरं रजोदर्शनं निश्चीयते" इति तावत्पूर्वमनूढायाः पुमसम्प्रयुक्ताया एवाऽनुद्वाहपुमसम्प्रयोगाऽरजोदर्शन-समष्ट्याऽक्षतयोनित्वेन कन्यात्वम्- इति । यत्तु **गोभिलगृह्यपरिशिष्टे-**

**नग्निकान्तु वदेत्कन्यां यावन्नर्तुमती भवेत् ।**
**ऋतुमती त्वनग्निका तां प्रयच्छेत्त्वनग्निकाम्** ॥ इति-

ऋतुमत्या अनग्निकाया: प्रदानमिति विरुद्धं प्रतिपादितम्, तदपि-तदीयभाष्य एव संगमय्य व्याख्यातं, तद्यथा- "तां कन्यामनग्निकामृतुमतीमपि दद्यात् तुरप्यर्थो भिन्नक्रमेण योजनीय:, तदेवम्-अनग्निकामपि दद्यात्, नग्निका पुन: श्रेष्ठा न पुनरनग्निकाया विवाह एव भवतीत्यभिप्राय इती"ति । ततश्चानग्निकाया: प्रदानप्रतिपादनं विरुद्धमपि गौणत्वेनाभ्यनुज्ञानं क्षत्रियादिपरकत्वेनोपरिष्टाद्वक्ष्यते। तथा चैवम्-

**प्राप्ते तु द्वादशे वर्षे रज: स्त्रीणां प्रवर्तते ॥**

इत्यस्याऽ प्ययमर्थ:- गर्भत: प्राप्ते द्वादशे, जन्मतस्तु प्राप्त एकादशेऽ र्थाज्जन्मतो व्यतीतदशमवर्षादूर्ध्वमिति । एतेन- "दशवर्षा भवेत्कन्या अत ऊर्ध्वं रजस्वला" इत्यपि वचनं व्याख्यातं भवति । तथा चैतावता- पूर्वत्र प्रदर्शितप्रस्तारक्रमेण जन्मतो व्यतीतदशमवर्षाया: प्राप्तैकादशवर्षाया अपि कन्यात्वप्रतिपादनं रजोदर्शनस्यानियतत्वेन तदभावपक्ष एवेति स्वीकर्तव्यं भवति । अत एव- शीतातिशयदेशीयानां, ग्रामीणानाञ्चातितन्वङ्गीनां प्रथमरजोदर्शन-स्योष्णातिशयदेशीयाभिर्नागरिकीभिश्चातिपरिपुष्टाङ्गीभि: समकालिकत्वासंभव-प्राकृतनियमदर्शनात्तथा- सर्वासामेव यथातथाविधानां स्त्रीणामत्रैव वर्षे मासे पक्षे दिने प्रथमरजोदर्शनं भवेदिति वक्तुमशक्यत्वाच्च दशमवर्षादूर्ध्वं सर्वासां रजस्वलात्वं विरुद्धमाशङ्क्य तदेव ह्यभिप्रेत्योक्तम्- **दशमे नग्निका वा स्याद्** इत्यनन्तरम्- **पारस्करगृह्यसूत्रगदाधरभाष्ये-संग्रहवाक्य-कारिकायाम्-**

**... ... ... ... द्वादशे वृषली स्मृता ।**
**अपरा वृषली ज्ञेया कुमारी या रजस्वला ॥**
**प्राप्ते तु द्वादशे वर्षे य: कन्यां न प्रयच्छति ।**
**मासि मासि रजस्तस्या: पिता पिबति शोणितम् ॥**
**एतच्च प्रायिकं ज्ञेयं न रजोदर्शनं भवेत् ।**
**स्त्रीणां कासाञ्चिद्वर्षेऽस्मिन्नाभाणि मनुनापि तत् ॥**
**उद्वहेत् स्त्रिंशदब्दस्तु कन्यां द्वादशवार्षिकीम् ।**
**त्र्यष्टवर्षो ऽष्टवर्षां वा धर्मे सीदति सत्वर: ॥**
**एकविंशतिवर्षो वा सप्तवर्षामवाप्नुयात् ।**
**वर्षैरेकगुणां भार्यामुद्वहेत्त्रिगुण: स्वयम् ।**
**त्रिंशदब्दो दशाब्दाञ्च भार्यां विन्दति नग्निकाम् ।**

**तस्माद्‌द्वाहयेत्कन्यां यावन्नर्तुमती भवेत्** ॥

इतिवचनजातं सङ्गच्छते ।

तथा च- प्रथमरजोदर्शनस्याऽनियतकालत्वेनातितन्वङ्गीनां गर्भतो द्वादशे जन्मतस्त्वेकादशे प्राप्ते वर्षे रजसो बहिर्दर्शनाऽसम्भवाद्-

**एतच्च प्रायिकं ज्ञेयं न रजोदर्शनं भवेत्** ।

**स्त्रीणां कासाञ्चिद्वर्षेस्मिन्नाभाणि मनुनापि तत्** ॥

इत्युक्तमपि सुतरां संगच्छते । अत एवैतस्यैवोत्तरार्धे- अस्मिन् गर्भतो द्वादशे जन्मतस्त्वेकादशे प्राप्ते वर्षे मनुनापि तद्रजोदर्शनं कासाञ्चिदतितन्वङ्गीनां नाभाणि नाकथीत्यर्थः स्पष्ट एव प्रतीयते । एवंहि कन्याया रजोदर्शनेन तत्पित्रादीनां दोषातिशयश्रवणादतिपरिपुष्टाङ्गीनां जन्मतो व्यतीतदशमवर्षादूर्ध्वं प्रायेण रजसो बहिर्दर्शनसंभवादतितन्वङ्गीनान्तु तदसंभवेप्यन्तर्रजः संभाव्यैव-

**दशवर्षा भवेत्कन्या,अतऊर्ध्वं रजस्वला** इत्युक्तं सङ्गच्छत एव । तथा चैतावता रजसोन्तः संभवेन बहिरपि दर्शनसंभवात् सति तु तद्दर्शने कन्यात्वनाशेन पित्रादीनां स्वामित्वकिञ्चित्क्षतेः-

**त्रिंशद्वर्षो वहेत्कन्यां हृद्यां द्वादशवार्षिकीम्** ।

**त्र्यष्टवर्षोऽष्टवर्षां वा धर्मे सीदति सत्वरः** ॥

इति **मनु**वचने "द्वादशवार्षिकीम्" इत्युपादानाद्-

**दशवर्षा भवेत्कन्या, अत ऊर्ध्वं रजस्वला**

इति दशमवर्षादूर्ध्वं रजस्वलात्वप्रदर्शनेऽपि द्वादशवर्षाया रजस्वलाया अप्युद्वाहो मध्यमपक्षीय इति वदन्तो मूर्खा एव;

**पित्रे दद्यान्न शुल्कन्तु कन्यामृतुमतीं हरन्** ।

**स हि स्वाम्यादतिक्राम्येदृतूनां प्रतिरोधनात्** ॥९।९३॥

इति पूर्वोक्तमनुस्मरणविरोधात्, तथा-

**वर्षैरेकगुणां भार्यामुद्वहेत्त्रिगुणः स्वयम्** ।

**त्रिंशदब्दो दशाब्दाञ्च भार्यां विन्दति नग्निकाम्** ॥

इति पूर्वोदाहृतवचनानुरोधबलेन "त्रिंशद्वर्ष" इति चाऽनुसृत्यैव "द्वादशवार्षिकीम्" इत्यस्य "गर्भतः प्राप्ते द्वादशे वर्षे दीयते" इत्यर्थे "तत्र च दीयते कार्यं भववत्" इतिसूत्रेण, यद्वा "गर्भतः प्राप्तं द्वादशं वर्षं प्रकृष्टं

दीर्घमस्या" इत्यर्थे- "कालाद्" इत्यनुवृत्तिसहकृतेन **प्रकृष्टे ठञ्** इतिसूत्रेण ठञ्प्रत्ययविधानत एव व्युत्पादनीयत्वाऽवश्यस्वीकर्तव्यतया तस्य च पुनर्जन्मतस्तु प्राप्तैकादशवर्षामपि तत एव "व्यतीतदशमवर्षाम्" इत्येवमर्थपर्यवसानाच्च, अन्यथा- "तत्र जातः", "तत्र भवः", "तदस्य ब्रह्मचर्यम्", "तदस्य परिमाणम्", "तमधीष्टो भृतो भूतो भावी" इत्येतैरपि सूत्रैस्तत्साधुत्वमात्रस्य तु सुतरां संसिद्धेः ।

तदेवम्- जन्मतो दशमवर्षादूर्ध्वं रजोदर्शनसम्भवेन तदर्वागेवोद्वाहस्य कर्तव्यत्वप्रतीतिनिश्चयेऽपि जन्मतः सार्धवर्षसप्तकं यावत्सोमादीनामुपभोगद्वारा स्वत्वसद्भावेन "षडब्दमध्ये नोद्वाह्ये" तिनिषेधात्,

**कालेऽदाता पिता वाच्यो वाच्यश्चानुपयन्पतिः ।**

**मृते भर्तरि पुत्रस्तु वाच्यो मातुररक्षिता ॥९।४॥**

इति **मनुवचनेना**ऽप्राप्ते व्यतीते वा समये दातुः पित्रादेर्दोषप्रदर्शनाच्च- समय एव तत्कर्तव्यतया ।

अथाऽपि पुनः स एव समयो यथावन्मीमांस्यते तत्र-तावज्जन्मतः सार्धवर्षसप्तकपर्य्यन्तसमयसमुदायं निषेधति- तदेव **ज्योतिर्निबन्धवचनं- निर्णयसिन्धौ, पारस्करगृह्यसूत्रगदाधरभाष्ये** च यथा-

**षडब्दमध्ये नोद्वाह्या कन्या वर्षद्वयं यतः ।**

**सोमो भुङ्क्ते ततस्तद्वद्गन्धर्वश्च तथानलः** ॥ इति । एवम्- **ऋग्वेदे, पारस्करगृह्यसूत्रे** च-

**सोमः प्रथमो विविदे गन्धर्वो विविद उत्तरः ।**

**तृतीयोग्निष्टे पतिस्तुरीयस्ते मनुष्यजाः ॥**

**सोमोऽददद् गन्धर्वाय गन्धर्वोऽददग्नये ।**

**रयिं पुत्राँश्चादादग्निर्मह्यमथो इमाम् ॥**

**सा नः पूषा शिवतमायमैरय सा न ऊरुविंशती विहर ।**

इति मन्त्रलिङ्गमपि ।

यत्तु- अत्र वर्षद्वयानुक्रमेण वर्षषट्कं यावत्सोमादीनामुपभोगद्वारा स्वत्वसद्भावबोधकं "षडब्दमध्ये नोद्वाह्ये"ति पूर्वोक्तज्योतिर्निबन्धवचनमनुपपन्नं, तदपीत्थं व्याख्येयम्- तद्यथा-"षडब्दमध्ये" इत्यस्य गर्भतो, जन्मतश्च व्यतीताः, प्राप्ताश्च "षट् च तेऽब्दाश्चे"त्येवं व्युत्पत्त्योभयत्रैव वाचकत्वशक्त्या गर्भतः प्राप्तषट्संख्यावाचिनो जन्मतस्तु व्यतीतचतुःसंख्या-

वाचिनश्च षट्शब्दस्य "षट् च षट् चे" त्येकशेषतो वाचकत्वशक्तचैव पुनरष्टसंख्यावाचिनश्च तस्य पश्चाद् "अब्द" शब्देन सह कर्मधारयं कृत्वा तदनु- तेषां मध्यमिति षष्ठीसमासतो निष्पन्नस्य "षडब्दमध्य"शब्दस्य सप्तम्येकवचनान्तत्वस्वीक्रियमाणतया तस्य च- "जन्मतोऽष्टवर्षाभ्यन्तरे" इत्यर्थो लभ्यत एव । वर्षद्वयमित्यस्यापि जन्मतो गर्भतश्च प्राप्तौ, व्यतीतौ च "द्वौ-अवयवौ यस्य त" दित्येवंव्युत्पत्त्योभयत्रैव वाचकत्वशक्त्या जन्मतो व्यतीतद्वित्वसंख्यावाचिनस्तत एव पुनः प्राप्तत्रित्वसंख्यावाचिनश्च "द्वि"शब्दात्तयप्प्रत्यये तस्य चाऽयजादेशे परिनिष्ठितस्य "द्वय"शब्दस्य- त्रितयार्थवाचकत्वमङ्गीकृत्य "वर्षाणां द्वय" मर्थात्त्रितयमित्यर्थे क्रियमाणे "जन्मतस्त्रिवर्षाभ्यन्तरे" इत्यर्थो लभ्यत एव । तथा चैवंव्युत्पत्त्येदृशे प्रस्तारे स्वीक्रियमाणे तावतः सार्धवर्षसप्तकसमुदायात्मकसमयस्य जन्मतोऽष्ट- वर्षाऽभ्यन्तरत्वं भवत्येव, तथैव तावतस्त्रिंशन्मासात्मकसार्धवर्षद्वयरूप- समयसमुदायस्यापि जन्मतस्त्रिवर्षाभ्यन्तरत्वं भवत्येव । तदेवम्, वर्षद्वयमित्यस्य "जन्मतस्त्रिवर्षाभ्यन्तरात्मकसार्धवर्षद्वयरूपकालपर्य्यन्त"मित्यर्थं कल्पयित्वा "षडब्दमध्ये" इत्यस्यापि- "जन्मतः सार्धवर्षसप्तकात्मकाष्टवर्षाभ्यन्तरे" इत्यर्थं स्वीकृत्य च तावतोऽष्टवर्षाभ्यन्तरस्य सार्धवर्षसप्तकात्मकसमयसमुदायस्य सोमगन्धर्वाग्नीनामुपभोगद्वारा स्वत्वसत्ताऽधिकरणत्वेन दोषश्रवणात् कन्योद्वाहे निषेधः क्रियते- "षडब्दमध्ये नोद्वाह्ये"त्यादिना, तथा च- **षडब्दमध्ये नोद्वाह्येत्यस्य- षडब्दमध्ये**- जन्मतः सार्धवर्षसप्त- कात्मकाऽष्टवर्षमध्ये कन्या नोद्वाह्या, यतो "वर्षद्वयं- जन्मतः सार्धवर्षद्वयात्मकत्रिवर्षाभ्यन्तरसमयपर्यन्तं सोमो भुङ्क्ते, ततस्तावन्तं समयं गन्धर्वो भुङ्क्ते, तथा-तेन प्रकारेणार्थात्तावन्तमेव समयमनलो भुङ्क्ते" इतिवाक्यार्थः सम्पद्यते ।

तदेवम्- जन्मत आरभ्य त्रिंशन्मासात्मकसार्धवर्षद्वयरूपकालानुक्रमेण सार्धवर्षसप्तकं यावत्सोमादीनामुपभोगद्वारा स्वत्वसद्भावेन दोषश्रवणान्नि- षेधसिद्धिरिति न काचिदनुपपत्तिः । न चाऽस्य वचनस्य यथाश्रुतेनैवाऽर्थेन सर्वत्र निर्बाधं निर्वाहात् सोमादीनां त्रिंशन्मासाऽनुक्रमेण सार्धवर्षसप्तकं यावदुपभोगद्वारा स्वत्वसद्भावबोधकतादृशवचनान्तरस्य कुत्राऽप्युल्लेखानु- पलम्भाच्च- एवंविधव्युत्पत्तिप्रस्तारात्मकक्लिष्टकल्पनया सर्वत्र दोषबाहुल्य- मात्र-मितिवाच्यम्, त्रिंशन्मासानुक्रमेण सार्धवर्षसप्तकं यावत्सोमादीना- मुपभोगद्वारा स्वत्वसद्भावबोधकस्पष्टोल्लेखकारिणा **गदाधरेण पारस्कर-**

**गृह्यसूत्रभाष्ये**-"षडब्दमध्ये नोद्वाह्ये" ति ज्योतिर्निबन्धवचनस्योल्लेखनात् । यदि खलु **गदाधरः**- "षडब्दमध्ये" नोद्वाह्येतिवचनस्य यथाश्रुतसरलार्थ-स्वीकारमेवाऽकरिष्यत्तदा ह्येकत्रैव प्रसङ्गे सोमादीनां त्रिंशन्मासा-नुक्रमेणोपभोगद्वारा स्वत्वसद्भावं न प्रादर्शयिष्यत्-इति- अगत्यैव स्वीकृता तथाविधापि क्लिष्टकल्पनाऽतीवोचिता सती न क्वापि किञ्चिद्दोषलेशकरीति सर्वं समीचीनमेवेति ।

एवम्, द्वितीयचतुर्थषष्ठाऽष्टमदशमद्वादशचतुर्दशवर्षात्मकसमयसमुदायो युग्मरूपेणाऽपि निषिध्यते स्मृत्यन्तरवचनेन- **निर्णयामृते**- यथा-

**चतुर्भिः षड्भिरष्टाभिर्दशद्वादशभिस्तथा ।**
**वर्षैर्विवाहिता कन्या वैधव्यमुपगच्छति** ॥ इति ।

पुनस्तथा तत्रैव **गौतमेनापि** निषिध्यते यथा-

**द्वादशे दशमे वाऽब्दे चतुर्थे वा चतुर्दशे ।**
**षष्ठेऽष्टमे द्वितीये वा कन्यकाश्चेत्प्रयच्छति ॥**
**करोति वैधव्यमपत्यशोकं दौर्भाग्यमात्यन्तिकमर्थनाशम् ।**
**युग्मे च वर्षे विहिते विवाहे न कन्यका वृद्धिमुपैति क्वापि ॥**
**मासत्रयादूर्ध्वमयुग्मवर्षे युग्मे च मासत्रयमेव यावत् ।**
**विवाहशुद्धिः खलु कन्यकाया ज्योतिः स्मृतीनामपि नो विरोधः ॥**
**अयुग्मे विधवा नारी युग्मे च विधवा भवेत् ।**
**तस्माद् गर्भान्विते युग्मे कन्यका सा पतिव्रता** । इति ।

**निर्णयसिन्धौ, पारस्करगृह्यसूत्रगदाधरभाष्ये** च- **राजमार्तण्डे** ऽपि-

**अयुग्मे दुर्भगा नारी युग्मे तु विधवा भवेत् ।**
**तस्माद् गर्भान्विते युग्मे विवाहे सा पतिव्रता ॥**
**मासत्रयादूर्ध्वमयुग्मवर्षे युग्मेऽपि मासत्रयमेव यावत् ।**
**विवाहशुद्धिं प्रवदन्ति सन्तो वात्स्यादयः स्त्रीजनिजन्ममासात्** ॥ इति।

अर्थादितदुक्तं भवति द्वितीयचतुर्थषष्ठाऽष्टमदशमद्वादशचतुर्दश-वर्षात्मकसमयसमुदायस्य युग्मत्वेन, तृतीयपञ्चमसप्तमनवमैकादशत्रयोदश-वर्षात्मकसमयसमुदायस्य त्वयुग्मत्वेन निषेधस्य पुनर्द्वितीयादियुग्मवर्षात्मक-समयसमुदायस्य मासत्रयपर्य्यन्तत्वेन, तृतीयाद्ययुग्मवर्षात्मकसमयसमुदायस्य तु मासत्रयोर्द्धत्वेन गर्भसहकृतयुग्मत्वेन वा प्रतिप्रसवः साकल्येन

वक्तुमवश्यमशक्य: । जन्मत: सार्धवर्षसप्तकात्मकसमयसमुदायस्य सोमादीनामुपभोगद्वारा स्वत्वसत्तारूपतो, जन्मत एकादशादिवर्षात्मकसमयसमुदायस्य तु युग्मस्याऽ युग्मस्य चाऽ पि रजोदर्शनसम्भवरूपतो निषेधात् ।

तदेवम्- जन्मत: सार्धवर्षसप्तकादूर्ध्वस्याऽ ष्टमनवमदशमात्मकस्यैव सार्धवर्षद्वयरूपसमयसमुदायस्य मध्ये जन्मतो युग्मस्य मासत्रयपर्य्यन्तत्वेनाऽ युग्मस्य तु मासत्रयोर्ध्वत्वेन गर्भसहकृतयुग्मत्वेन च प्रतिप्रसवस्तु निश्चयेन वक्तुं शक्य: । एतेन-

**सप्तसंवत्सरादूर्ध्वं विवाह: सार्ववर्णिक: ।**
**कन्याया: शस्यते राजन्नन्यथा धर्मगर्हित: ॥**

इति **निर्णयसिन्धौ, पारस्करगृह्यसूत्रगदाधरभाष्ये** च- **यमवचने**- "सप्तसंवत्सरादूर्ध्वम्" इत्यस्य जन्मतो व्यतीतसप्तसम्वत्सरादूर्ध्वम् इत्यर्थस्वीकर्तव्यतया तस्य च पुनर्जन्मत: प्राप्ताऽ ष्टमवर्षत्वसत्त्वेन जन्मत: सार्धवर्षसप्तकोर्ध्वात्मकसमयसत्ता भवत्येवेति ।

यच्च- **निर्णयसिन्धौ- पराशरमाधवीये, पारस्करगृह्यसूत्रगदाधरभाष्ये** च-

**जन्मतो गर्भाधानाद्वा पञ्चमाब्दात्परं शुभम् ।**
**कुमारीवरणं दानं मेखलाबन्धनं तथा ॥**

इति वचनमनुपपन्नम्; तदपि चेत्थं व्याख्येयम्-

"जन्मतो गर्भाधानाद्वा व्यतीतात्पञ्चमाब्दात्परमर्थाज्जन्मतो गर्भतो वा प्राप्तात्षष्ठाब्दात्परं जन्मत: सप्तमे षष्ठे वेति यावत्" इत्येवं व्युत्पादनेन जन्मत: सप्तमवर्षाया:, षष्ठवर्षायाश्चापि चन्द्रलग्नबलादिनाऽ तिपरिपुष्टाङ्ग्या: कन्याया: सोमादीनामुपभोगद्वारा स्वत्वसत्तयैव सत्यपि गुणवद्वरलाभे तस्मै वैवाहिकविधिना सम्प्रदानावरोधनेऽ पि तस्या: पुन: पित्रादीनां प्राणसंशयावस्थायां गुणवद्वरवरणवाग्दानयोस्त्वनवरोधात्तदभिप्रायेणैव व्यवस्थापनयोपपत्तिसद्भाव: सम्भवति । अत एव- "कुमारीवरणं दानम्" इत्युक्तं तत्र सङ्गच्छते । अत एव च-

**राहुग्रस्ते तथा शुद्धे पितॄणां प्राणसंशये ।**
**अतिप्रौढा च या कन्या चन्द्रलग्नबलेन तु ॥**

इति **निर्णयसिन्धौ- राजमार्तण्डवचने** चकारादतिबाला प्राणसंशय इत्युक्तेरिति**कमलाकरभट्टो**क्तिरपि सङ्गच्छते- इति । ननु चैवमपि-

**अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत् ।**

**अनन्यपूर्विकां कान्तामसपिण्डां यवीयसीम्** ॥ इति **याज्ञवल्क्यवचने**- "यवीयसीम्" इत्यस्य- अतिशयेन युवतिरितिविग्रहे युवतिशब्दादतिशयरूपार्थे "ईयसुन्प्रत्ययान्तत्वेन व्युत्पादनीयतया "युवति" शब्दस्य च पुनः-

**बाला स्यात् षोडशाब्दा तदुपरि तरुणी त्रिंशतिर्यावदूर्ध्वं**

**प्रौढा स्यात्पञ्चपञ्चाशदवधि परतो वृद्धतामेति नारी ।**

इति **कोकशास्त्रे**, तथा-

**"बालेति" गीयते नारी यावद्वर्षाणि षोडश ।**

**ततस्तु तरुणी ज्ञेया द्वाविंशद्वत्सरावधि ॥**

इति **भावप्रकाशे** च वचनात्तदनुरोधेन षोडशवर्षोर्ध्वत्रिंशद्वर्षपर्य्यन्तैतच्चतुर्दशवर्षात्मकावान्तरप्रत्येकसमयरूपवयोवाचित्वावश्यस्वीकर्तव्यतया द्वाविंशतितमवर्षोर्ध्वत्रिंशद्वर्षपर्यन्तैतद्वर्षाष्टकात्मकावान्तरप्रत्येकसमयरूपवयःस्थात्वरूपार्थस्वीकारावश्यकत्वेन याज्ञवल्क्यप्रतिपादितः प्रौढाविवाहो विसंवादीति चेद् ?

अत्रोच्यते- यौवनस्याप्युपचयापचयधर्मलक्षणत्वेन पूर्ववयोरूपतया युवतिशब्दस्य पूर्ववयःस्थेत्यर्थस्वीकरणीयतयैव हीयसुन्प्रत्ययान्तस्य युवतिशब्दस्याऽ प्यत्यन्तपूर्ववयःस्थेत्यर्थस्वीकारावश्यकत्वात्, उपचयापचयधर्मलक्षणस्य हि वयसः पूर्वोत्तररूपेण द्वित्वदर्शनात्, तथैव शतपथश्रुतेश्च । अत एव- "वयसि प्रथमे" इति **पाणिनीयसूत्रमहाभाष्यविवरणे**- उपचयापचयधर्मलक्षणरूपेण वयसो द्वित्वाश्रयणेन यौवनस्थपूर्ववयोरूपत्वमभिप्रेत्य "वयस्यचरमे" इतिवार्तिकं प्रत्याख्यातं **कैयटेन** । यत्तु-वयसः कौमारयौवनस्थाविरेतित्रित्वमाश्रित्य "वयस्यचरमे" इतिवार्तिकं पुनस्तेनैवारब्धं, तदेकदेशीयम्; ये त्रीणि वयांसीच्छन्ति कौमारयौवनस्थाविराणि तन्मतेनेदं वक्तव्यं, वधूटचिरराटशब्दयोर्द्वितीयवयोवचनत्वादित्यर्वाचीनं मतान्तरं प्रदर्श्य यदा तु द्वे एव वयसी उपचयापचयलक्षणे इति दर्शनम्, तदैतन्न वक्तव्यं यौवनस्यापि प्रथमवयोरूपत्वादिति तुशब्देन तत्रारुचिमुद्भाव्य स्वाभिमतस्य प्राचीनपक्षस्य समर्थनात् । ततश्चैवं पूर्वपक्षे व्युत्पादितस्य यवीयसीमित्यस्यात्यन्तपूर्ववयसमर्थादत्यन्तन्यूनवयसमित्येवमर्थमभिप्रेतवता **याज्ञवल्क्येन** न कथंकथमपि प्रौढाविवाहः प्रतिपादित इत्याशङ्कितुमपि

शक्यते । तदेवं- कन्योद्वाहे जन्मत: सार्धवर्षसप्तकादूर्ध्वस्य दशमवर्षपर्य्यन्तस्य सार्धवर्षद्वयात्मकस्यैव समयसमुदायस्य सोमादीनामुपभोगद्वारा स्वत्वसद्भावस्य रजोदर्शनस्य चोभयोरेवाऽनधिकरणत्वेन परममुख्यत्वं भवति ।

ततश्चैवं स्थिते- युग्माऽयुग्मत्वजन्यनिषेधप्रतिप्रसवप्रकारश्चैष यथा-

तावत्सार्धवर्षद्वयात्मकसमयसमुदायमध्ये हि जन्मत: सार्धवर्षसप्तकादूर्ध्वस्य मासषट्कस्य जन्मतोऽष्टमवर्षतया युग्मत्वेन तत्र च मासत्रयपर्यन्तस्यैव प्रतिप्रसवसद्भावात्तस्य पुनर्मासत्रयोर्ध्वतया प्रतिप्रसवाभावेपि गर्भतस्तु नवमर्षतयाऽयुग्मत्वेन तस्य च मासत्रयोर्ध्वत्वसत्त्वेन पुन: प्रतिप्रसव: । एवं- तदूर्ध्वस्य मासत्रयस्याऽपि जन्मतो नवमवर्षत्वेनाऽयुग्मतया तत्र च मासत्रयोर्ध्वस्यैव प्रतिप्रसवसद्भावेन तदर्वाचीनस्य तदभावेऽपि गर्भतस्तु दशमवर्षतया युग्मत्वेन तस्य च मासत्रयपर्यन्ततया गर्भतो युग्मतया च पुन: प्रतिप्रसव: ।

तथा- तदूर्ध्वस्य मासनवकस्यापि गर्भतो दशमवर्षत्वेन युग्मतया तस्य पुनर्मासत्रयपर्य्यन्तत्वाभावेन प्रतिप्रसवाभावेऽपि जन्मतस्तु नवमवर्षत्वेनाऽयुग्मतया तस्य तु मासत्रयोर्ध्वत्वसद्भावद्वारा गर्भतो दशमवर्षत्वेन युग्मत्वसद्भावद्वारा च पुन: प्रतिप्रसव: ।

तथैव- तदूर्ध्वस्य मासत्रयस्यापि गर्भत एकादशवर्षत्वेनाऽयुग्मतया तस्य च मासत्रयोर्ध्वत्वाभावेन प्रतिप्रसवासम्भवेपि जन्मतस्तु दशमवर्षतया तस्य च पुनर्मासत्रयपर्य्यन्तत्वेनैव पुन: प्रतिप्रसवसम्भव: ।

तथैवं पुन:- तदूर्ध्वस्य मासनवकस्याऽपि जन्मतो दशमवर्षत्वेन युग्मतया तस्य च मासत्रयपर्यन्तत्वाभावेन प्रतिप्रसवाभावेऽपि गर्भतस्त्वेकादशवर्षत्वेनाऽयुग्मतया तस्य च पुनर्मासत्रयोर्ध्वतयैव पुन: प्रतिप्रसव इति । युक्तञ्चैतदेव;

**वैवाहिको विधि: स्त्रीणामौपनायनिक: पर: ।**
**पतिसेवा गुरौ वासो गृहार्थोऽग्निपरिक्रिया ।** ॥ २।६७॥ इति

**मनुना** कन्यानामुद्वाहस्य कुमारोपनयनस्थानीयत्वस्मरणात् । उपनयनसमयस्य च ब्राह्मणकुमाराणां गर्भतो जन्मतो वाऽष्टमवर्षात्मकस्यैव; क्षत्रियकुमाराणान्तु गर्भत एकादशवर्षात्मकस्य जन्मतस्तु दशमवर्षात्मकस्यैव, तथा वैश्यकुमाराणान्तु गर्भतो द्वादशवर्षात्मकस्य जन्मतस्त्वेकादशवर्षात्मकस्यैव परममुख्यत्वं समाम्नायते,

**गर्भाष्टमेऽष्टमे वाब्दे ब्राह्मणस्योपनायनम् ।**
**राज्ञामेकादशे सैके विशामेके यथाकुलम्** ॥१।१४॥ इति **याज्ञवल्क्य**स्मरणात् ।

तथा च- जन्मत:सार्धवर्षसप्तकादूर्ध्वस्य दशमवर्षपर्यन्तस्यैव समयसमुदायस्य त्रैवर्णिककन्योद्वाहे परममुख्यत्वं सिद्धम् ।

न च त्रैवर्णिककन्योद्वाहस्य त्रैवर्णिककुमारोपनयनस्थानीयत्वेन तदुपनयनस्य च क्रमेण षोडशद्वाविंशचतुर्विंशपर्य्यन्तात्मकस्याऽपि गौणत्वाभ्यनुज्ञानात्तदुद्वाहसमयस्यापि तावद्वर्षपर्यन्तात्मकस्य गौणत्वं स्वीकर्तव्यम् । एवञ्च-

**त्रिंशद्वर्ष: षोडशाब्दां भार्यां विन्देत नग्निकाम् ।**
**दशवर्षोष्टवर्षां वा धर्मे सीदति सत्त्वर:** ॥
इति **निर्णयसिन्धौ भारतवचनम्**, तथा-
**काममामरणात्तिष्ठेद् गृहे कन्यर्तुमत्यपि ।**
**न चैवैनां प्रयच्छेत्तु गुणहीनाय कर्हिचित्** ॥९।८९॥
**त्रीणि वर्षाण्युदीक्षेत कुमार्यृतुमती सती ।**
**ऊर्ध्वन्तु कालादेतस्माद्विन्देत सदृशं पतिम्** ॥९।९०॥

इत्येवमादीनिं मन्वादिवचनान्यप्यनुगृहीतानि भवन्ति, तथैवम्- "त्रिंशद्वर्षो वहेत्कन्यां हृद्यां द्वादशवार्षिकीम्" इति पूर्वोदाहृत**मनु**वचने- "द्वादशवार्षिकीम्"इत्यस्यापि- "तत्र जात:," "तत्र भव: "तदस्य ब्रह्मचर्य्यम्," तदस्य परिमाणम्," "तमधीष्टो भूतो भृतो भावी" इत्यादिभिरपि सूत्रै: साधुत्वनिष्पादनस्य सुसङ्गतिश्च भवतीति वाच्यम्, त्रैवर्णिककुमारोपनयनसमयस्य हि क्रमेण गर्भतो जन्मतो वाऽष्टमवर्षात्मकस्यैव, तथा गर्भत एकादशवर्षात्मकस्याऽपि जन्मतस्तु दशमवर्षात्मकस्यैव, तथैव- गर्भतो द्वादशवर्षात्मकस्याऽपि जन्मतस्तु एकादशवर्षात्मकस्यैव परममुख्यत्वेपि पुनर्नवमादिषोडशवर्षपर्यन्तात्मकसमयसमुदायस्य, तथा- गर्भत एकादशादिद्वाविंशवर्षपर्य्यन्तात्मकसमयसमुदायस्य, तथैव- गर्भतो द्वादशादिचतुर्विंशवर्षपर्य्यन्तात्मकसमयसमुदायस्य च त्वनन्यगतिकेनैव प्रतिबन्धेनाऽवरोधे गौणत्वमभ्यनुज्ञातं श्रुतिस्मृत्यादौ नेच्छयाऽपि । अत एव हि न तत्र तत्र गौणसमयेषूपनयने तेषां प्रत्यवाय:, प्रायश्चित्तो वा कश्चिदापद्यते । अपितु- तावत्पर्य्यन्तमप्यकृतोपनयनानामेव तदूर्ध्वं प्रत्यवायस्मरणेन तदपनुत्त्यर्थं व्रात्यस्तोमात्मकप्रायश्चित्तोपदेशात् ।

त्रैवर्णिककन्योद्वाहे तु- जन्मतः **सार्धवर्षसप्तकादूर्ध्वस्य** दशमवर्षपर्य्यन्तस्यैव सार्धवर्षद्वयात्मकसमयसमुदायस्य परममुख्यत्वम्, नतदूर्ध्वस्याऽपि रजोदर्शनसंभवात् । तदसम्भवनिश्चये तु सति तदभावपर्यन्तमपि रजोदर्शनस्याऽनियतत्वात्पूर्वोक्तनिर्णयामृतोद्धृतगौतम-वचनानुरोधेन दशमवर्षोर्ध्वस्यापि गर्भतःप्राप्तषोडशवर्षपर्यन्तस्य जन्मतस्तु व्यतीतचतुर्दशवर्षपर्यन्तस्यैतावतो वर्षचतुष्टयात्मकस्यैव समयसमुदायस्य मध्ये युग्मस्य मासत्रयपर्य्यन्तत्वेनाऽयुग्मस्य तु मासत्रयोर्ध्वत्वेन पुनः प्रतिप्रसवविधानात् त्रैवर्णिकीनामजातरजोदर्शनानां पुमसम्प्रयुक्तानामनूढानामुद्वाहे भवति गौणत्वम्, न च तदूर्ध्वस्याऽपि, क्वापि तादृशवचनान्तराभावात्, प्रत्युत- रजोदर्शनसंभवेन सञ्जाते सति रजोदर्शने पूर्वत्र पूर्वोत्तरपक्षेषूदाहृतैस्तैस्तैर्वचनैर्दोषातिशयज्ञापनेन प्रायश्चित्ताऽऽधिक्यस्मरणाच्च । "त्रिंशद्वर्षः षोडशाब्दाम्" इति **निर्णयसिन्धौ- भारतवचनन्तु** रजोदर्शनस्याऽनियतत्वेन तावत्पर्य्यन्तमप्यसञ्जातरजस्काया यद्वा-कारणान्तरादिकृतरजोवरोधायाः पूर्वोदाहृतनिर्णयामृतोद्धृतगौतमवचनाऽनुरोधेन गर्भतः प्राप्तषोडशाब्दाया अपि जन्मतस्तु व्यतीतचतुर्दशाब्दाया एव ब्राह्मणकन्यायाः कन्यात्वाऽप्रणाशाऽभिप्रायव्यवस्थापनयैव संगमयितुं सुशक्यमेव; तत्समनन्तरं तत्रैव हि- "अतोऽप्रवृत्ते रजसि कन्यां दद्यात्पिता सकृत् ।" इति वचनान्तरोपन्यासद्वारा तदेकवाक्यत्वप्रदर्शनात् ।

**त्रिंशद्वर्षो वहेत्कन्यां हृद्यां द्वादशवार्षिकीम्** । इति **मनु**वचनेऽपि-**द्वादशवार्षिकीम्** इत्यस्य तु- **तत्र च दीयते कार्यं भववत्** इति, **काला**दित्यनुवृत्तिसहकृतेन **प्रकृष्टे ठञ्** इति वा सूत्रेणैव साधुत्वस्वीकारेणोपपत्तिसद्भावः पूर्वं प्रदर्शित एव । **काममामरणात्तिष्ठे**-दित्यादिमन्वादिवचनानान्तु गुणहीनवरसम्प्रदानापेक्षया रजोदर्शनजन्यदोष-बोधकशास्त्रातिक्रमस्यैव श्रेयस्करत्वस्वीकारेण गुणवद्वराऽलाभपक्षव्यवस्थापन-यैवोपपत्तिसद्भावः पूर्वत्रैव किञ्चिन्मात्रसूचितोऽपि तद्ब्राह्मणसाधारणतया पुनः क्षत्रियादिमात्रासाधारण्येन- किमपीह प्रपञ्च्यते-

यथा- क्षत्रियादिकन्यानां द्वाविंशचतुर्विंशवर्षपर्यन्तमपि स्वयंवरविधान-पूर्वकोद्वाहविधानस्य वहुषु पुराणेतिहासादिषु तत्र तत्र स्पष्टोपलभ्यमानतया-

**दद्याद् गुणवते कन्यां नग्निकां ब्रह्मचारिणीम् ।**
**अपि वा गुणहीनाय नोपरुन्ध्याद्रजस्वलाम् ॥**

इत्यादि पूर्वोक्तवचनानामपि ब्राह्मणमात्रपरत्वव्यवस्थापनेनैवोपपत्ति-संभवाद्, राजकुमारीणां हि जन्मत एव प्रभृति सुखसन्तोष-परम्परामनारतमनुभवन्तीनां नैकगुणगणगरीयसीनां सुकुमारीणां यदा तदा यत्र तत्र च स्वानुरूपवरदुर्लभप्रायतयैव तासां, तत्पित्रादीनामपि रजोदर्शनजन्य-दोषस्याऽ प्यप्रवृत्त्या तद्बोधकशास्त्रातिक्रमस्यापि परमार्थतस्त्वसंभवाच्च । अत एव महाभारते वनपर्वणि २९३ तमेऽ ध्याये २३ तमे श्लोके-

**यौवनस्थां तु तां दृष्ट्वा स्वां सुतां देवरूपिणीम् ।**

**अयाच्यमानाञ्च वरैर्नृपतिर्दुःखितो ऽ भवत्** । इति ।

तथा **श्रीमद्भागवते** दशमस्कन्धे, उत्तरार्धे ५० तमे श्लोके-

**यौवनस्थामपि च तां शीलाचारसमन्विताम् ।**

**न वव्रे पुरुषः कश्चिद् भयात् तस्य महात्मनः ॥** इति ।

तथा पुन**र्वाल्मीकिरामायणे** (२-११८-३४) अनसूयां प्रति सीतावाक्यम्-

**पतिसंयोगसुलभं वयो वेक्ष्य पिता मम**

**चिन्तामभ्यगमद् दीनो वित्तनाशादिवाधनः** । इति ।

अत एव ऋतुमत्या अनग्निकायाः प्रदानं गौणत्वेनाभ्यनुज्ञातं **गोभिलगृह्यपरिशिष्टे**- तद्यथा-

**नग्निकान्तु वदेत् कन्यां यावन्नर्तुमती भवेत्**

**ऋतुमती त्वनग्निका तां प्रयच्छेत् त्वनग्निकाम्** । इति ।

अत्र तुशब्दोप्यर्थो भिन्नक्रमेण योजनीयः, तदेवमनग्निकामपि दद्यादित्यादिपूर्वापरव्याख्या पूर्वत्रापि प्रदर्शितैव । दृश्यते हि– तत्र तत्र बहुषु पुराणेतिहासादिषु राजकुमारीणां बह्वीनां प्रौढानां स्वयंवरविधान-पूर्वकोद्वाहविधानं प्रत्यक्षमेव । रजोदर्शनमात्रेण कन्यात्वस्य किञ्चिन्मात्र-नाशेप्यनुद्वाहपुमसम्प्रयोगयोस्तु सत्तयैव तदवस्थित्या कन्याभिन्नात्वेऽ-प्यकन्यात्वाऽ भावेन कन्येव कन्येति सादृश्यलक्षणया पुनः कन्यात्वसद्भावाद् गान्धर्वोद्वाहो युक्त एव; रजोवतीनां गान्धर्वैकाधिकारस्मरणात्, क्षत्रियादीनां हि करिष्यमाणपुनर्वैवाहिकविधिसद्भावेऽपि तत्पूर्वं गान्धर्वादिचतुर्विधोद्वाहस्मरणाच्च; यथाऽ ऽ हतुः- **निर्णयसिन्धौ**- **मनुः**- तत्रैव **पराशर-माधवीये**- **देवलश्च**-

**षडानुपूर्व्या विप्रस्य क्षत्रस्य चतुरोऽवरान् ।**
**विट्शूद्रयोस्तु तानेव विद्याद्धर्म्यानराक्षसान् ॥ इति**
**गान्धर्वादिविवाहेषु पुनर्वैवाहिको विधिः ।**
**कर्तव्यश्च त्रिभिर्वर्णैः समर्थेनाऽग्निसाक्षिकः ।** ॥ इति च ।

अत एव- **सत्यवतीकुन्त्योर**प्युद्वाहात् पूर्वं रजोदर्शनपुंसम्प्रयोगाभ्यां कन्यात्वस्य किञ्चिन्नाशेऽप्यनुद्वाहमात्रस्यैकस्य सत्तयैव किञ्चिदवस्थितया कन्याभिन्नात्वेऽप्यकन्यात्वाऽभावेन कन्यासादृश्यसद्भावात्- कन्यात्वेन- **शन्तनु-पाण्डुभ्यां** सह गान्धर्वोद्वाह उपपन्न इति सर्वमतीव शुभम् ।

हरि- ॐ तत्सत् । श्रीकृष्णार्पणमस्तु ।

इति **श्रीपण्डितडिल्लीराज**कृता **कन्योद्वाहसमयमीमांसा** समाप्ता ।

# अथ विधवोद्वाहतिमिरालोकः

## अथ पूर्वार्द्धम्

अथेह खलु विधवानां विवाहस्याऽन्याय्यत्वमधर्म्यत्वञ्च सिद्धान्तितवतां सनातनैकधर्मावलम्बिप्राचीनाचार्यवंश्यसभ्यानां, न्याय्यत्वं, धर्म्यत्वञ्च घटयितुकामानामर्वाचीनसामाजिकसभ्यानां न्यायतो धर्मतश्च बहुधा विप्रतिपत्तौ-

**पूर्वपक्षः**

किमत्र न्याय्यत्वं, धर्म्यत्वञ्चाहोश्विन्नेत्यमन्दसन्देहसन्दोहान्दोलने तावत्पूर्वपक्षिणः पुरःसृत्यैवमुद्घोषयन्ति- यद्-

अपत्यार्थं रत्याद्यर्थञ्च स्त्रीपुंसयोरविनाभावाशेषानुभवादत एव शुक्रशोणितसम्पर्कसम्भवमपत्यम्प्रति शुक्रद्वारा पुंस इवास्थिस्नायुमज्जानां, शोणितद्वारा स्त्रिया अपि त्वङ्मांसरुधिराणां संसर्गवैषम्येण जनकता-वैषम्यात्स्वत्वप्रभुत्वयोरप्यनिर्विशेषेण तस्य दानविक्रयपरित्यागादावप्युभयो-रधिकारमुख्यत्वाद्, अथ च कथञ्चित्तदभावेऽ पुत्रत्वजन्यगत्य-भावादिदोषविशेषस्य च सत्ताधिकरणत्वेनोभयोरेव तत्परिहाराय दत्तकपरिग्रहा-द्यात्मकपुत्रान्तरकरणादावधिकाराविशेषात्, तथा धर्मविशेषान्तरानुष्ठानादौ च प्रायशोऽधिकारसाहित्याच्च स्त्रीपुंसयोः साम्याद्, एवम्- पुंसां सपरिग्रहाणामपि यदृच्छयैव परिग्रहान्तरेणाऽधिवेदनवत् स्त्रीणां सधवानामपि तथैव पुरुषान्तराश्रयणे, अथ च- स्त्रीणां मरण-प्रणाश-प्रमाद-पतन-संन्यासा-ऽचिकित्स्यरोगग्रासा-ऽकारणपरित्यागादिनानाकारणकलाप-समुच्चयव्यस्तवशादपरिग्रहाणां परिग्रहान्तरपरिणयवत्, पुंसामपि तथा कारणवशादपतिकानां चात एव **विगतो, विप्रकृतो, विकृतो, विप्रकृष्टो, विनिर्गतो, विनियुक्तो, विशिष्टो, विभिन्नो वा धवो यासा**मित्येवं व्युत्पत्तिविशेषवशाद् 'विधवे' त्यपराऽभिधानभाजामासामबलानां पुनर्विवाहे निराबाधस्य तुल्यन्याय्यत्वाद्, अत्रार्थे- दण्डापूपिकस्य कैमुतिकस्य च

ायस्यापि सद्भावाच्च, एवम्- अपरञ्च- धर्मतो विचार्य्यमाणेऽपि-
णामपत्योत्पादनरूपैकदृष्ट-प्रयोजनकत्वेन तदितराऽदृष्टप्रयोजनादर्शनात्सति
रणे तदर्थमपि च पुनर्विवाहस्यात्यावश्यकत्वाङ्गीकर्तव्यत्वात्तथैवमत्रार्थे
वारान्तरोन्नयने चाऽन्यत्र कुत्रापि निर्बाधाच्च, प्रत्युत परमतमवलम्ब्यैव
ायं, धर्मञ्च दूरतः परित्यज्यापि निषेधपक्षाङ्गीकारे तु धनलिप्सादिनापि
न्धवादिभिर्मृतानुगमनलभ्यत्वाद्युपदेशविशेषप्रदर्शितस्याऽदृष्टस्याऽननुभूतस्य
स्वर्गादिरूपस्य सुखस्य लोभेन, वैधव्यधर्ममार्गावस्थानावस्थायान्तु
ाज्जभोग्यभूतसांसारिकविषयात्मकप्रत्यक्षसुखस्याऽलभ्यतया व्यत्ययतः शरीरस्य
ावपनादिना, नानाभरणकञ्चुकप्रमुखपरिधानीयादिदूरतरपरिवर्जनादिना च
रूप्यसंपादनीयतया, तथा- एकाहारचान्द्रायणमासोपवासादिस्थण्डिलशयनादि-
ासुदुष्करकर्मकलापकरणादिना परिशोषणीयतयाऽपि मृतप्रायं मन्यमानत्वेन
त एवोभयथापि तदनुगमनस्यैव प्राशस्त्यमभिपश्यन्तीनामासामबलानां
ववानां जीवन्तीनामगत्यैवाऽग्निप्रवेशेनाऽऽत्महत्यादिदुर्दर्शदुःश्रवदुराचारा-
णकर्मणः प्रायशः परिदृश्यमानत्वाद्, एवम्- तथा कर्तुमशक्नुवतीना-
ष्टरजसां, तदितरासाञ्च बालविधवानां जन्मवैयर्थ्यापादने शनैःशनै-
ानिहृदयभावेन भवितव्यत्वात्तदपि तस्य सुदुष्करत्वेन प्ररूढे सति यौवने
भचारेण गर्भिणीनां लोकापवादादिभयाद् गर्भपातनादिना यथाकथञ्चि-
ातस्य चाऽपत्यस्य हिंसनादिना वा भ्रूणहत्याबालहत्यादिनाना-
चारावस्थानस्य प्रायशः स्पष्टप्रत्यक्षपरिदृश्यमानत्वाच्चैवमादिदुष्कर्मप्रवृत्ति-
ारस्योत्तरोत्तरवृद्धेर्जायमानत्वेन लोके सर्वत्र सुतरामनर्थबाहुल्यापत्ते-
नङ्गीकारे त्वतथाभाव्यत्वात्, प्रत्युत-सर्वत्र समुचिताचारस्य प्रवर्तिष्य-
ात्वाच्च विधवानां विवाहस्य सर्वथैव न्याय्यत्वं, धर्म्यत्वञ्च सर्वैरङ्गीकर्तव्यम् ।

किञ्च, आसीदेव हि पुराप्ययमाचारः प्रमीतपतिकात्वादिना विधवानां
ान्तरपरिग्रहद्वारा पुत्रोत्पादनरूपः परेषां सनातनैकधर्मावलम्बिनाम्, अत एव
ं प्राचीनार्य्यवंश्यानां पूर्वपुरुषैस्तथोल्लिखितं तत्र तत्रोपलभ्यते, तावत्-
**ऋसंहितायाम्,** सप्तमाऽष्टके, दशममण्डले द्वितीयानुवाके षष्ठाध्याये,
ीयसूक्ते, सप्तविंशकण्डिकायाम्, यथा-

**उदीर्ष्व नार्यभिजीवलोकं गतासुमेतमुपशेषऽएहि ।**

**हस्तग्राभस्य दिधीषोस्तवेदं पत्युर्जनित्वमभिसंबभूथ** ॥ इति ।

- "नारि ? - हे नरस्त्रि ?, उदीर्ष्व-उत्तिष्ठ, लोकम्-जगति, अभिजीव-प्राणं
य, गतासुम्-मृतम्, एतम्-शवं चितास्थम्,उपशेषे-किमनुशेषे?, एहि-

आगच्छ, तव-भवत्याः, पत्युः-मर्त्तुः, अभि-अनु, हस्तग्राभस्य– पाणिग्रहीतुः, दिधीषोः-देवरस्य, इदम्-एतद्, जनित्वम्- जन्म, संबभूथ- बभूव" इत्यर्थः ।

अत्र, अन्वारूढोत्थापनमन्त्रे- तव प्राथमिकपाणिग्रहीतरि पत्यौ परेतेऽपि पुनः पाणिग्रहीता त्वत्पत्युरनुज एवास्मीति किमिति मृतमनुगच्छसीत्युत्थाय मां पतिं भजस्वेति वाक्यार्थनिष्कर्षेण, "हस्तग्राभस्ये" ति विशेषलिङ्गेन च पूर्वपतिमरणानन्तरमपि देवरकर्तृकपुनःपाणिग्रहणस्य स्पष्टमवबोधनाद्, अत एव- **उदीर्ष्वे**त्येतन्मन्त्रवाक्यतः पूर्वत्र पठितेन **इमा नारीरविधवाः** इति मन्त्रवाक्येनापि स्त्रीणामवैधव्यप्रतिपादनाच्च विधवानां विवाहस्य सर्वथैवाऽङ्गीकर्तव्यत्वं भवति । एवम्, तत्रैव, अष्टमाष्टके, दशममण्डले, सप्तमानुवाके, तृतीयाध्याये, प्रथमसूक्ते, सप्तविंशाऽष्टाविंशकण्डिकयोः, **पारस्करगृह्यसूत्रे** प्रथमकाण्डे- चतुर्थ्यां कण्डिकायाम्, षोडशसूत्रे च-

**सोमः प्रथमो विविदे गन्धर्वो विविद उत्तरः ।**
**तृतीयोऽग्निष्टे पतिस्तुरीयस्ते मनुष्यजाः ॥**
**सोमोऽददद्गन्धर्वाय गन्धर्वोऽददग्नये ।**
**रयिं च पुत्रांश्चाऽदादग्निर्मह्यमथो इमाम् ॥** इति ।

अत्र- वैवाहिकमन्त्रे- जन्मदिनप्रभृत्येव त्रिंशन्मासानुक्रमेण सार्धवर्षसप्तकं यावत्सोमगन्धर्ववन्हिभिरुपभुक्तत्वेनाऽन्तिममानुषपतेस्तुरीयत्वश्रुत्या, तथैवम्- दानचोदनश्रुतिस्मृतिप्रभृतिभ्यः स्त्रीणां दानपक्षे मानुषपतेः पञ्चमत्वस्याप्यवश्यम्भाव्यतया चासां जातपूर्वव्यभिचाराणां परपूर्वतायाः सुस्पष्टावगम्यत्वेन परेतेऽपि पत्यौ तुरीये पुनः पञ्चमादौ तासां नियोगे निर्बाधादपि युक्तमेव विधवानां विवाहस्य न्याय्यत्वं, धर्म्यत्वञ्चेति सर्वथैवाऽभ्युपेयमेतद्भवति । तथा तत्रैव **पारस्करगृह्यसूत्रे** प्रथमकाण्डे- पञ्चम्यां कण्डिकायाम्- एकादशसूत्रे-

**अशून्योपस्था जीवतामस्तु माता पौत्रमानन्दमभिविबुध्यतामियꣳ स्वाहा** ॥ इति । अत्राप्येतद्वैवाहिकमन्त्रे- "अशून्योपस्था" इति, "जीवतामस्तु माता" इति, "पौत्रमानन्दमभिविबुध्यताम्" इति चैवंमन्त्रलिङ्गादजातपुत्रे परेते पत्यौ शून्योपस्थतया भाव्यत्वे जीवत्पुत्रमात्रभाव्यत्वेन पौत्रानन्दाभिविबोधकत्वाभाव्यत्वात्तदन्यथाऽनुपपत्त्यैव विधवानां नियोगस्याऽवश्यकर्तव्यत्वप्रतीत्या विधवानां विवाहस्याभ्युपगन्तव्यत्वं भवति ।

तथा तत्रैव षठ्यां कण्डिकायाम्, तृतीयसूत्रे, **ऋक्संहितायाम्-** अष्टमाष्टके-दशममण्डले सप्तमानुवाके तृतीयाध्याये प्रथमसूक्ते-सप्तविंशकण्डिकायाञ्च-

**गृभ्णामि ते सौभगत्वाय हस्तं मया पत्या जरदष्टिर्यथा सः ।**
**भगो ऽ अर्यमा सविता पुरन्धिर्मह्यन्त्वाऽ दुर्गार्हपत्याय देवाः ॥**

अत्रापि वैवाहिकमन्त्रे वाक्यार्थनिष्कर्षसमालोचनाद्वन्हिरूपभगादि-कर्तृकप्रदानतस्तैरुपभुक्तत्वरूपार्थिकार्थप्रतीत्या स्त्रीणां स्पष्टं बहुभर्तृकात्व-मायातीति तथाऽवश्यंस्वीकरणीयतया विधवानां विवाहस्याऽङ्गीकर्तव्यत्वमेव ।

एममेव-तथा-अपरा श्रुतिः-

**तस्मादेकस्य बह्व्यो जाया भवन्ति नैकस्यै बहवः सहपतयः** । इति ।

अत्र- "सहे"ति पदेनैकस्या युगपदेव बहुपाणिग्रहीतृकत्व-निषेधज्ञापनद्वारा प्राथमिकस्य पाणिग्रहीतुः प्रणाशाद्युत्तरं पाणिग्रहीत्रन्तरा-श्रयणज्ञापनात्स्पष्टमासां बहुभर्तृकात्वमिति विधवानां विवाहस्य सर्वथैवाऽभ्यु-पगन्तव्यत्वं भवति । एवमेव- धर्मशास्त्रेष्वपि तत्र तत्र तथा स्पष्टं लिखितमुपलभ्यते । तत्र-तावत्कलियुगीयधर्मनिरूपणप्रस्तावे **पराशरः-**

**नष्टे मृते प्रव्रजिते क्लीवे च पतिते पतौ ।**
**पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते** ॥ इति ।

**नारदो** ऽप्येवमेवाहान्यत्र ।

अत्र-नष्टादिपतिकानां नारीणां पुरुषान्तरेण सह पुनर्विवाहस्य पित्रादिकर्तृकत्वश्रौतसंबन्धयोर्बोधनात्सधवानामपि तथा प्राप्तौ विधवानान्तु कैमुतिकन्यायेनापि तत्कर्तव्यत्वप्रतीतेः, अथ च- "मृते" इति विशेषलिङ्गाच्च-सर्वथैव भवतीति सर्वैरङ्गीकर्तव्यमेवैतद्भवति । तथा **मनु**रपि तावन्नवमाध्याये-

**देवराद्वा सपिण्डाद्वा स्त्रिया सम्यङ्नियुक्तया ।**
**प्रजेप्सिताऽधिगन्तव्या सन्तानस्य परिक्षये ॥९।६०॥**
**विधवायां नियुक्तस्तु घृताक्तो वाग्यतो निशि ।**
**एकमुत्पादयेत्पुत्रं न द्वितीयं कथञ्चन ॥९।६१॥**
**द्वितीयमेके प्रजनं मन्यन्ते स्त्रीषु तद्विदः ।**
**अनिर्वृतं नियोगार्थं पश्यन्तो धर्मतस्तयोः"॥९।६२॥** इति ।

अत्र सन्तानपरिक्षयात्मकहेतुप्रदर्शना"त्प्रजेप्सिते" ति विशेषोपादानाच्च सन्ततेरनुत्पत्तावुत्पन्नविनष्टौ चाऽनीप्सायामपि सधवानामपि तत्कर्तव्यत्व-प्रतीतिर्जायत इति-किं पुनर्विधवानान्तु; अत एवोदाहृतद्वितीयपद्यस्थ "विधवे" ति पदमपत्योत्पादनयोग्यपत्यभावपरत्वेन व्याचख्यौ **कुल्लूकभट्टो**ऽपि। अत्रार्थे-पुराणमपि प्रमाणम्- तद्यथा- तत्र-तावत्- **श्रीमद्देवीभागवते**- प्रथमस्कन्धे, एकादशाध्याये-

**इच्छया संस्थिता चात्र सुखकामार्थिनी हि सा ।**
**दिनानि कतिचित् स्थित्वा स्वेच्छया चागमिष्यति ॥२१॥**
**त्वयैवोदाहृतं पूर्वं धर्मशास्त्रमतं तथा ।**
**न स्त्री दुष्यति चारेण न विप्रो वेदकर्मणा ॥२२॥**

**बार्हस्पत्यप्रणीतं च शास्त्रं गृह्णन्ति मानवाः ।**
**को विरोधोऽत्र देवेश कामयानां भजन् स्त्रियम् ॥५७॥**
**स्वकीयं बलिनां सर्वं दुर्बलानां न किञ्चन ।**
**स्वीया च परकीया च भ्रमोऽयं मन्दचेतसाम् ॥५८॥**
**तारा मय्यनुरक्ता च यथा न तु तथा गुरौ ।**
**अनुरक्ता कथं त्याज्या धर्मतो न्यायतस्तथा ॥५९॥**
**गृहारम्भस्तु रक्तायां विरक्तायां कथं भवेत् ।**
**विरक्तेयं यदा जाता चकमेऽनुजकामिनीम् ॥६०॥**

तथा तत्रैव-द्वितीयस्कन्धे-षष्ठेऽध्याये-

**मृगयारममाणस्तु वने पाण्डुर्महाबलः ।**
**जघान मृगबुद्ध्या तु रममाणं मुनिं वने ॥४०॥**
**शप्तस्तेन तदा पाण्डुर्मुनिना कुपितेन च ।**
**स्त्रीसङ्गं यदि कर्तासि तदा ते मरणं ध्रुवम् ॥४१॥**
**इति शप्तस्तु मुनिना पाण्डुः शोकसमन्वितः ।**
**त्यक्त्वा राज्यं वने वासं चकार भृशदुःखितः ॥४२॥**
**कुन्ती माद्री च द्वे भार्ये जग्मतुः सह सङ्गते ।**
**सेवनार्थं सतीधर्मं संश्रिते मुनिसत्तमाः ॥४३॥**

गङ्गातीरे स्थितः पाण्डुर्मुनीनामाश्रमेषु च ।
शृण्वानो धर्मशास्त्राणि चकार दुश्चरन्तपः ॥४४॥
कथायां वर्तमानायां कदाचिद्धर्मसंश्रितम् ।
अशृणोद्वचनं राजा सुदृष्टं मुनिभाषितम् ॥४५॥
अपुत्रस्य गतिर्नास्ति स्वर्गे गन्तुं परन्तप ? ।
येन केनाप्युपायेन पुत्रस्य जननं चरेत् ॥४६॥
१अंशजः २पुत्रिकापुत्रः ३क्षेत्रजो ४गोलकस्तथा ।
५कुण्डः ६सहोढः ७कानीनः ८क्रीतः ९पौनर्भवस्तथा ॥४७॥
१०दत्तः केनापि चाशक्तौ धनग्राहिसुताः स्मृताः ।
उत्तरोत्तरतः पुत्रा निकृष्टा इति निश्चयः ॥४८॥
इत्याकर्ण्य तदा प्राह कुन्तीं कमललोचनाम्
सुतमुत्पादयाऽऽशु त्वं मुनिं गत्वा तपोन्वितम् ॥४९॥
ममाज्ञया न दोषस्ते पुरा राज्ञा महात्मना ।
वशिष्ठाज्जनितः पुत्रः सौदासेनेति मे श्रुतम् ॥५०॥
तं कुन्ती वचनं प्राह मम मन्त्रोऽस्ति कामदः ।
दत्तो दुर्वाससा पूर्वं सिद्धिदः सर्वथा प्रभो ? ॥५१॥
निमन्त्रयेहं यं देवं मन्त्रेणानेन पार्थिव ? ।
आगच्छेत्सर्वथा सो वै मम पार्श्वे नियन्त्रितः ॥ ५२॥
भर्त्तुर्वाक्येन सा तत्र स्मृत्वा धर्मं सुरोत्तमम् ।
संगम्य सुषुवे पुत्रं प्रथमं च युधिष्ठिरम् ॥ ५३॥
वायोर्वृकोदरं पुत्रं जिष्णुं चैव शतक्रतोः ।
वर्षे वर्षे त्रयः पुत्राः कुन्त्या जाता महाबलाः ॥ ५४॥
माद्री प्राह पतिं पाण्डुं पुत्रीं मे कुरुसत्तम ? ।
किं करोमि महाराज ? दुःखं नाशय मे प्रभो ? ॥५५॥
प्रार्थिता पतिना कुन्ती ददौ मन्त्रं दयान्विता ।
एकपुत्रप्रबन्धेन माद्री पतिमते स्थिता ॥५६॥
स्मृत्वा तदाश्विनौ देवौ मद्रराजसुता सुतौ ।
नकुलं सहदेवं च सुषुवे वरवर्णिनी ॥५७॥

**एवन्ते पाण्डवाः पञ्च क्षेत्रोत्पन्नाः सुरात्मजाः ।**
**वर्षवर्षान्तरे जाता वने तस्मिन् द्विजोत्तमाः ॥५८॥**
**एकस्मिन्समये पाण्डुर्माद्रीं दृष्ट्वाथ निर्जने ।**
**आश्रमे चातिकामार्तो जग्राहाऽऽगतवैशसः ॥५९॥**
**मामामामेति बहुधा निषिद्धोपि तया भृशम् ।**
**आलिलिङ्ग प्रियां दैवात्पपात धरणीतले ॥६०॥**
**यथा वृक्षगता वल्ली छिन्ने पतति वै द्रुमे ।**
**तथा सा पतिता बाला कुर्वन्ती रोदनं बहु ॥६१॥**
**प्रत्यागता तदा कुन्ती रुदती बालकास्तथा ।**
**मुनयश्च महाभागाः श्रुत्वा कोलाहलं तदा ॥६२॥**
**मृतः पाण्डुस्तदा सर्वे मुनयः शंसितव्रताः ।**
**सहाग्निभिर्विधिं कृत्वा गङ्गातीरे तदादहन् ॥६३॥**
**चक्रे सहैव गमनं माद्री दत्त्वा सुतौ शिशू ।**
**कुन्त्यै धर्मं पुरस्कृत्य सतीनां सत्यकामतः ॥६४॥**
**जपदानादिकं कृत्वा मुनयस्तत्रवासिनः ।**
**पञ्चपुत्रयुतां कुन्तीमनयन्हस्तिनापुरम् ॥६५॥** इति ।

एवञ्च- स्वभ्रातुः परेतस्य **चित्राङ्गदस्य**, **विचित्रवीर्य्यस्य** च भार्ययोर**म्बिकाऽम्बालिकयो**र्देवरेण व्यासेनोत्पादितौ **पाण्डुधृतराष्ट्रौ**, जीवत एव **पाण्डोः** पत्न्योः **कुन्तीमाद्रयो**र्धर्मवायुजिष्णुनासत्यैरुत्पादिता **युधिष्ठिरभीमार्जुननकुलसहदेवा** इति ।

एवमेव प्रमाणान्तराणि बहुशोऽन्यत्राप्युपलभ्यन्ते । अत एव - उन्मत्तादेः पत्युर्द्विषन्त्याः स्त्रियास्त्यागो दायापवर्तनञ्च निषिद्धौ **मनुना**- तत्रैव नवमाऽध्याये यथा-

**उन्मत्तं पतितं क्लीवमबीजं पापरोगिणम् ।**
**न त्यागोऽस्ति द्विषन्त्याश्च न च दायापवर्तनम् ।** ९॥७९॥ इति ।

अत्र- "द्विषन्त्या" इति लिङ्गादुन्मत्तादेः पत्न्या जीवत्यपि पत्यौ तदनुज्ञया विनापि पुत्रार्थं पुरुषान्तराश्रयणात्मके द्वेषेपि न त्यागदायापवर्तने इति- अर्थात्- सधवानामपि तथा निराबाधं प्राप्तौ विधवानान्तु किमुतेति गम्यते । अत एव- **योगीश्वरो याज्ञवल्क्योऽप्याचाराध्याये**-

**दत्तामपि हरेत्पूर्वाच्छ्रेयाँश्चेद्वर आव्रजेत्** ॥६५॥ **इति** ।
**ैवाध्याये-**

**अपुत्रां गुर्वनुज्ञातो देवर: पुत्रकाम्यया ।**
**सपिण्डो वा सगोत्रो वा घृताभ्यक्त ऋतावियात्** ॥६८॥
**आगर्भसंभवाद् गच्छेत्पतितस्त्वन्यथा भवेत्** ।
**अनेन विधिना जात: क्षेत्रजोऽस्य सुत: स्मृत:** ॥६९॥ इति ।

तथा **व्यवहाराध्याये**ऽ**पि** पुन:स एव-

**अपुत्रेण परक्षेत्रे नियोगोत्पादित: सुत: ।**
**उभयोरप्यसौ रिक्थी पिण्डदाता च धर्मत:** ॥१२७॥ इति

[ । अत्र-"दत्तामपी"त्यादिनार्धश्लोकेन गुणगणगरिष्ठवरान्तराऽऽगमने च दोषसत्त्वे दत्ताया अपि हरणेनाऽन्यस्मै प्रदानं पित्रादिभि: ति स्पष्टमभिधानात्सधवानामपि पित्रादिकर्तृकस्य श्रौतसंबन्धस्य :स्य सिद्धौ किं पुनर्विधवानामिति ज्ञायते । "अपुत्रा" मित्यादिना च ावे तदर्थं देवरादिष्वधिगन्तव्येति स्पष्टमभिधानादनुत्पन्नपुत्राया ाश्च नियोगाऽनुशासनात्सधवानामपि तथा सद्भावसम्भवेन प्राप्तौ न्त्वपुत्राणामर्थसिद्ध एव । "अपुत्रेणे"त्यादिनाऽपि नियोगादुत्पन्न- ा धनहारित्वपिण्डदातृत्वयोर्धर्म्यत्वाभिधानात्तस्य धर्म्यत्वे स्थिते विवाहस्य धर्म्यत्वं निश्चेतव्यं भवति । अत एव **वशिष्ठोपि** वेहीनादिभ्यो दत्ताया अपि हरणमभ्यनुज्ञातवान्, यथा-

**कुलशीलविहीनस्य षण्ढादिपतितस्य च ।**
**अपस्मारिविधर्मस्य रोगिणां वेषधारिणाम्** ॥
**दत्तामपि हरेत्कन्यां सगोत्रोढां तथैव च** ॥ इति

अत्र वशिष्ठाशयं प्रकाशितवान्**नारदो** यथा-

**अज्ञातदोषेणोढाया निर्दोषा नान्यमाश्रिता ।**
**बन्धुभि: सा नियोक्तव्या निर्बन्धु: स्वयमाश्रयेत्** ॥ इति ।

अत्र **वशिष्ठनारदाभ्यां** पूर्वमज्ञातदोषेण येन केनाऽप्यूढा ऽ- ामैथुना चेत्सा पित्रादिभिरन्यत्र नियोक्तव्या, निर्बन्धुश्चेत्स्वयमेव समाश्रयेदित्यर्थाभिधानात्सधवानामपि पुनर्विवाहोऽभ्यनुज्ञात इति

विधवानामपुत्राणान्तु का कथा ! अत एव- अमुमर्थं सुस्पष्टं व्याजहार **नारदो** यथा-

**उद्वाहितापि सा कन्या न चेत्सम्प्राप्तमैथुना ।**
**पुनः संस्कारमर्हेत यथा कन्या तथैव सा ॥** इति

**वशिष्ठो**ऽप्यक्षतयोनीनां विधवानां पुनर्विवाहसंस्कारं प्रदर्शितवान् यथा-

**पाणिग्रहे मृते बाला केवलं मन्त्रसंस्कृता ।**
**सा चेदक्षतयोनिः स्यात्पुनः संस्कारमर्हति** ॥ इति ।

अत एव **कात्यायनेन** स्त्रीणामपत्योत्पादनैकदृष्टप्रयोजनार्थं सर्जनमुक्तम्- तद्यथा-

**अपत्यार्थं स्त्रियः सृष्टाः स्त्री क्षेत्रं बीजिनो नराः ।**
**क्षेत्रं बीजवते देयं नाबीजी क्षेत्रमर्हति ॥** इति ।

अत्र- अबीजी क्षेत्रं नार्हतीत्यभिधानादपि षण्ढादिभ्यो दत्ताया अपि निवर्तनं ज्ञायते । एतदर्थमेव मैथुने दोषाभावः प्रदर्शितो **मनुना** यथा-

**न मांसभक्षणे दोषो न मद्ये न च मैथुने ।**
**प्रवृत्तिरेषा भूतानां निवृत्तिस्तु महाफला** ॥इति ।

अत्र- मैथुने सामान्येन दोषाभावप्रदर्शनात्सधवानामपि पुरुषान्तराश्रयणे दोषाभावात्किंपुनर्विधवानामपुत्राणां; तदर्थमेव स्त्रीणां सृष्टत्वात् । यत्तु-

**नोद्वाहिकेषु मन्त्रेषु नियोगः कीर्त्यते क्वचित् ।**
**न विवाहविधावुक्तं विधवावेदनं पुनः ॥**

इति मानवीं स्मृतिमवलम्ब्य नियोगाभावपक्षप्राबल्यमङ्गीकुर्वन्ति भवन्तः, तन्न-

**सोमः प्रथमो विविदे गन्धर्वो विविद उत्तरः ।**
**तृतीयो**ऽ**अग्निष्टे पतिस्तुरीयस्ते मनुष्यजाः ॥**
**सोमो**ऽ**ददद् गन्धर्वाय गन्धर्वो**ऽ**दददग्नये ।**
**रयिं च पुत्राँश्चा**ऽ**दादग्निर्मह्यमथो इमाम्** ॥ इत्यादिषु, तथा-

**अशून्योपस्था जीवतामस्तु माता पौत्रमानन्दमभिविबुध्यतामियꣳ स्वाहा** ॥ इत्यादिषु च **पारस्करगृह्यसूत्रोक्तवैवाहिकमन्त्रेषु** तत्र तत्र तत्तल्लिङ्गात्तदन्यथानुपपत्त्याऽर्थापत्त्या च यथायथं

नियोगस्य स्पष्टं श्रुतत्वात् । अतश्च- मानव्याः स्मृतेरयमर्थो युक्ततरः- **उद्वाहिकेषु मन्त्रेषु नियोगो न कीर्त्यते ? अपितु कीर्त्यत एव, विवाहविधौ पुनर्विधवावेदनं नोक्तम् ? अपितूक्तमेव** इति सर्वत्र काक्वा स्वरेण योजनीयमावश्यकम् ।

अत एव नियोगोत्पन्नस्यापि स्वक्षेत्रजत्वेनौरसवत् पुंनाम-निरयोत्तारकतयैव पुत्रत्वं, पैतृकरिक्थहारित्वं च क्षेत्रस्वामिन एव धर्म्यत्वेनाऽभिहितमतीव युज्यते **मनुना** नवमाध्याये- यथा-

**हरेत्तत्र नियुक्तायां जातः पुत्रो यथौरसः ।**
**क्षेत्रिकस्य तु तद्बीजं धर्मतः प्रसवश्च सः ॥ १४५॥**
**धनं यो बिभृयाद् भ्रातुर्मृतस्य स्त्रियमेव वा ।**
**सोऽपत्यं भ्रातुरुत्पाद्य दद्यात्तस्यैव तद्धनम्। ॥१४६॥** इति ।

अत एव- अत्रार्थे- तत्रैवाध्याये- तेनैवोक्तानि सङ्गच्छन्तेतराम्, यथा-

**यथा गोश्वोष्ट्रदासीषु महिष्यजाविकासु च ।**
**नोत्पादकः प्रजाभागी तथैवान्याङ्गनास्वपि ४८॥**
**ये क्षेत्रिणो बीजवन्तः परक्षेत्रप्रवापिणः ।**
**ते वै सस्यस्य जातस्य न लभन्ते फलं क्वचित् ॥४९॥**
**यदन्यगोषु वृषभो वत्सानां जनयेच्छतम् ।**
**गोमिनामेव ते वत्सा मोघं स्कन्दितमार्षभम् ॥५०॥**
**तथैवाऽक्षेत्रिणो बीजं परक्षेत्रप्रवापिणः ।**
**कुर्वन्ति क्षेत्रिणामर्थं न बीजी लभते फलम् ॥५१॥**
**फलन्त्वनभिसन्धाय क्षेत्रिणां बीजिनां तथा ।**
**प्रत्यक्षं क्षेत्रिणामर्थो बीजाद्योनिर्गरीयसी ॥५२॥**
**ओघवाताहृतं बीजं यस्य क्षेत्रे प्ररोहति ।**
**क्षेत्रिकस्यैव तद्बीजं न वप्ता लभते फलम् ॥५३॥** इति ।

इत्थं खल्वन्तर्दृष्ट्या समालोच्य सम्यग्गवेषणे क्रियमाणे च विचारेऽन्यान्यपि नानाश्रुतिस्मृतिप्रभृतिशास्त्राणि युक्त्यन्तराणि च यत्रतत्र बहुशः समुपलभ्यन्ते । तथा चैवं श्रुतिस्मृतिपुराणप्रभृतिनानाविधशास्त्राणां नैकविधयुक्तिविशेषाणाञ्च सद्भावमन्यथाकृत्वा कथङ्कारं निर्लज्जतया तथा साहसिक्यमवलम्ब्य मुधैव मुहुर्मुहुर्विप्रतिपद्यमाना विधवानां विवाहस्याऽन्याय्यत्वमधर्म्यत्वञ्च सिद्धान्तयन्ति भवन्तः - इति ।

इति पूर्वपक्षः ।

## अथोत्तरपक्षः

तत्र ह्येवं विधवाविवाहस्य न्याय्यत्वं, धर्म्यत्वञ्च घटयितुकामानां, विधवाजनकुचमर्दनसमर्पितसर्वस्वानामर्वाचीनसामाजिकसभ्योन्मत्तदिग्गजानामन्तकाः, समस्तश्रुतिस्मृतिपुराणादिसकलशास्त्रानन्तयुक्तिविशेषपञ्चास्या, विधवाविवाहस्य सर्वथैवाऽन्याय्यत्वमधर्म्यत्वञ्च सिद्धान्तितवन्तः सन्तः सनातनैकधर्मावलम्बिनो, विधवाजनव्रतविधानदीक्षागुरवो, विधवाविवाहखण्डनगहनारण्येषु प्रविष्टा हृष्टस्वान्ताः स्वैरविहारिणः प्राचीनार्य्यवंश्यसभ्यकेशरिणः पुनः पुनरुपर्युपर्युत्प्लुत्योत्प्लुत्याऽतितर्जयन्तोऽतीव गर्जन्त उत्तरयन्त एवं प्रत्युद्घोषयन्ति-

इह खल्वार्य्यावर्ताऽपराभिधे धर्मक्षेत्रे भारतभूमिमण्डले सकलेष्वपि वर्णाश्रमसम्बन्धिषु श्रौतस्मार्तधर्मेषु यथा स्वातन्त्र्येण पुरुषा यथायथमधिक्रियन्ते, न तथा स्त्रियः । तेषाञ्च बहूनामपि धर्माणां "धर्मार्थकाममोक्ष"-पदैर्व्यवह्रियमाणानां चतुःसंख्यात्वेन **चतुर्वर्ग** इति समष्टिनाम विख्यातमेव । तस्य च प्रायेण पुरुषाणामेवाऽनुष्ठीयमानत्वात् "पुरुषार्थ" इति चापरं व्यष्टिनामाऽपि प्रसिद्धतरमेव । यतो- "धमार्थकाममोक्षाः" पुरुषार्थपदेनैवाऽ-भिधीयन्ते, नतु "स्त्र्यर्थ" पदेनापि; तासां स्वातन्त्र्येणाऽनुष्ठानेधिकाराभावात् । तत्त्वञ्च-"पुरुषाणामर्थः प्रयोजन" मिति व्युत्पत्त्या तत्रतत्र वर्णाश्रमसम्बन्धि-श्रौतस्मार्तकर्मकलापेषु पुरुषाणामेव प्रयोजकत्वेन पुरुषप्रवर्तकत्वम् । यथा खलु "जायमानो ह वै ब्राह्मणस्त्रिभिर्ऋणैर्ऋणवाञ्जायते, यज्ञेन देवेभ्यः, प्रजया पितृभ्यः, स्वाध्यायेनर्षिभ्यः" इति हि श्रुतिर्ब्राह्मणानेव स्वातन्त्र्येण प्रवर्तयति, न ब्राह्मणीस्तासान्तु साध्वीनामेव केवला सहाऽधिकारश्रुतिर्विवाहादुत्तरत्रैव कुत्र कुत्रचित्पुरुषैरनुष्ठीयमानेषु गार्हस्थ्याश्रमसम्बन्धिष्वेव श्रौतस्मार्तादिधर्मविशेषेषु सति संभव एव स्वपुरुषसाहित्यमात्रं बोधयति, नतु तथा पुरुषवत्काचन श्रुतिः स्वातन्त्र्येण प्रवर्तिका । तथा च **मनुः**-

**वैवाहिको विधिः स्त्रीणामौपनायनिकः परः ।**
**पतिसेवा गुरौ वासो गृहार्थोऽग्निपरिक्रिया ॥२॥६७॥** इति ।

अत एव वक्ष्यमाणमनुवचनमपि सुसङ्गतं भवति; तद्यथा-

**नास्ति स्त्रीणां पृथग्यज्ञो न व्रतं नाप्युपोषणम् ।**
**पतिं शुश्रूषते यत्तु तेन स्वर्गे महीयते ॥** इति ।

अत एव- अपत्यार्थं, रत्याद्यर्थञ्च स्त्रीपुंसयोरविनाभावाविशेषानुभवस्य शुक्रशोणितसम्पर्कसम्भवमपत्यम्प्रति शुक्रद्वारा पुंस इवाऽस्थिस्नायुमज्जानां,

शोणितद्वारा स्त्रिया अपि त्वङ्मांसरुधिराणां संसर्गावैषम्येण जनकताऽ वैषम्यात् स्वत्वप्रभुत्वयोरप्यनिर्विशेषेण तस्य दानविक्रयपरित्यागादावप्युभयोरधिकारमुख्य-त्वस्य च कथञ्चित्तदभावेऽ पुत्रत्वजन्यगत्यभावादिदोषविशेषस्य च सत्ता-धिकरणत्वेनोभयोरेव तत्परिहाराय दत्तकपरिग्रहाद्यात्मकपुत्रान्तरकरणा-दावधिकाराऽ विशेषस्य, तथा धर्मविशेषानुष्ठानादौ च प्रायशोऽ धिकार-साहित्याच्च स्त्रीपुंसयोः साम्ये हेतुत्वेऽ पि न तथा साम्यस्य सपरिग्रहाणां पुंसां यदृच्छयैव परिग्रहान्तरेणाऽ धिवेदनवत् स्त्रीणां पुरुषान्तराश्रयणे हेतुत्वम्।

अत एव मातापैतृकबीजगर्भसमुद्भवैनोनिबर्हिणां, गर्भाधान-पुंसवन-सीमन्तोन्नयन-जातकर्म-नामकर्म-निष्क्रमा-ऽन्नप्राशनान्तानां सप्तानां संस्कार-कर्म्मणां समन्त्रकाणामेवात्मनिष्ठानुद्भूतजात्यादिशक्तिविशेषाभिव्यञ्जकतया तद्विधेः समन्त्रकत्वं तद्वतामेव पुंसां कृते विहितं, नतु तदभाववतीनां स्त्रीणामपि, अपितु पुनस्तासां कर्तव्यानामपि तेषां निर्मन्त्रकत्वमेव । यथाऽऽह **याज्ञवल्क्यः- तूष्णीमेताः क्रियाः स्त्रीणां विवाहस्तु समन्त्रकः** ॥१॥१३॥ इति ।

अथ च पुनस्तासां चूडोपनयनसंस्कारयोस्त्वविधानमेव, किन्तु- केवलमेकस्यैव विवाहस्य समन्त्रकत्वमिति दशानां कर्म्मणां पूर्वसप्तकस्यैव निर्मन्त्रकत्वेन मातापैतृकबीजगर्भसमुद्भवैनसां कात्स्न्येनाऽ प्रणाशाद्, अथच-तासामात्मनिष्ठाऽ नुद्भूतजात्यादिशक्तिविशेषासत्त्वाद् अत एव- तादृशयोरष्ट-मनवमयोस्त्वभावेनैव मातापैतृकबीजगर्भसमुद्भवैनोनिवर्हणद्वारात्मनिष्ठाऽ-नुद्भूतजात्यादिशक्तिविशेषाऽ भिव्यञ्जकसंस्कारविशेषानुत्पत्तेः केवलमेकस्यैव दशमस्य विवाहसंस्कारस्य समन्त्रकत्वेन यत्किञ्चिन्मात्रावस्थितात्म-निष्ठानुद्भूतशक्तिविशेषाभिव्यञ्जनात्, पुंसान्तु- तादृशात्मनिष्ठानुद्भूत-जात्यादिशक्तिविशेषस्य साकल्येनैव सत्त्वेन तदभिव्यञ्जकतादृशसंस्कारदशक-समन्त्रकत्वसद्भावाद्, अथ च विशेषत आत्मनिष्ठानुद्भूतजात्यादिशक्तिविशेषा-भिव्यञ्जकयोरष्टमनवमयोः समन्त्रकयोः साकल्यसद्भावाच्चाऽ ऽत्मनिष्ठा-नुद्भूतजात्यादिशक्तिविशेषाभिव्यञ्जकसंस्कारविशेषस्यापि साकल्येनैवोत्पत्त्या न कथं कथमपि स्त्रीपुंसयोः साम्यम् ।

अत एव त्रैवर्णिकानां जन्मना शूद्रत्वमर्थादेकजातित्वं प्रतिपाद्य संस्कारेण पुनर्द्विजातित्वं प्रतिपादितम् । न च संस्कारो ह्यसतोप्युत्पादकः, अपितु सत एवाऽ नुद्भूतस्याऽ भिव्यञ्जकः, अन्यथा शूद्रस्यापि संस्कारेण द्विजातित्वमुत्पद्येत, नच तस्य तथोत्पद्यते- इति यथा खलु शूद्रे

द्विजातित्वस्याऽसत एव संस्कारमात्रेण नाभिव्यक्तिः, तथा त्रैवर्णिकस्त्रीषु सवर्णास्वपि साकल्येनाऽसत एव द्विजातित्वस्य संस्कारमात्रेण नाऽभिव्यक्तिः, तथा च सुश्रुतेऽप्युक्तम्- **अस्ति सतां भावानामभिव्यक्तिः** इति, **केवलात्सौक्ष्म्यान्नाभिव्यज्यन्ते** इति च । ततश्च स्त्रीमात्रे पुंमात्रवत्कस्याऽप्यतिशयरूपस्याऽनिर्वचनीयात्मनिष्ठानुद्भूतजात्यादिशक्तिविशेषस्य साकल्यसत्ताया अभावेनाऽसतोऽनभिव्यञ्जकतयैव दशानां संस्काराणां मध्ये कर्तव्यभूतस्यापि पूर्वसप्तकस्य निर्मन्त्रकत्वम् । अत एव हि- अष्टमनवमयोस्तु पुनरकर्तव्यत्वमेव ।

किन्तु किन्तु त्रैवर्णिकानां पुंसामग्न्याधानाऽऽदिगार्हस्थ्याधिकारार्थमेव सवर्णस्त्रीणामविनाभावसद्भावेन तदर्थं कर्तव्यभूतस्यैकस्यैव दशमस्य विवाहसंस्कारस्य समन्त्रकत्वेन यत्किञ्चिन्मात्रावस्थितस्याऽऽत्मनिष्ठानुद्भूतजात्यादिशक्तिविशेषस्याऽभिव्यञ्जनादग्न्याधानादिगार्हस्थ्याऽधिकारकृत एव साहित्यसत्ताया आवश्यकत्वेन पुंसाधर्म्यम्, अन्यदा तु सति संभव एव तदावश्यकत्वादथ चाऽसंभवे पुनस्तज्जीवनमात्रस्य साहित्यसत्तयाऽप्यग्निहोत्रादिगार्हस्थ्यप्रवर्तनाच्च न तत्साधर्म्यम् । अन्यथा रजस्वलायां पत्न्यामग्निहोत्रादिगार्हस्थ्यस्य परिलोपः प्रसज्येत । नच तथात्वेऽपि तस्य परिलोपः कथमपि युज्यते । अत एव- नहि तथा धर्म्यत्वेन क्वचित्कदाचिच्छ्रुतः स्मृतो वा । अत एव- आश्रमसमुच्चयपक्षे त्रैवर्णिकानां **पत्न्या सह यष्टव्यम्** इति नियमसत्त्वेऽपि रजस्वलायां पुनस्तस्यां तदपरोधविधिबलात्तन्नैरपेक्ष्येणाऽधिकार इव वानप्रस्थाश्रमजिगमिषायामपि पत्न्याः पुत्रनिक्षेपपक्षे तत्त्वसत्त्वेन तद्विरहिणस्तदपरोधविधिबलादेव तन्नैरपेक्ष्येण तत्राऽधिकारः श्रुत्यैव विहितो यथा- **मिताक्षरायाम्**- "यस्य व्रत्येऽहनि पत्न्यनालम्भिका स्यात्तामपरुध्य यजेत" इति ।

एतदेवाऽभिप्रेत्य खलु- **याज्ञवल्क्यस्**त्रैवर्णिकानां वानप्रस्थाश्रमे पत्न्याः साहित्यस्य पाक्षिकत्वं स्मरति स्म यथा-

**सुतविन्यस्तपत्नीकस्तया वाऽनुगतो वनम् ।**
**वानप्रस्थो ब्रह्मचारी साग्निः सोपासनो व्रजेत् ॥** इति ।

अथ चात्र- "ब्रह्मचारी" ति विशेषलिङ्गेन व्यवायपरित्यागप्रतिपादनात्पत्न्याः साहित्यपक्षे तत्संभावनासंभवसद्भावात्कथञ्चित्सति तु तस्मिन्ब्रह्मचर्य्यविप्लवेन वानप्रस्थाश्रमकर्तव्यजितेन्द्रियत्वहानात्तदनुपादेयतया तत्साहित्यापेक्षया तद्विरहस्यैव श्रेयस्त्वं प्रतीयते । अत एव हि-

**निन्द्यास्वष्टासु चान्यासु स्त्रियो रात्रिषु वर्जयन् ।**
**ब्रह्मचार्येव भवति यत्रतत्राश्रमे वसन् ॥३।५०॥**

इति मनुवचनव्याख्यानावसरे "यत्रतत्राश्रमे वसन्" इत्यनुवादमात्रम्, गृहस्थेतराश्रमत्रये जितेन्द्रियत्वविधानाद् रात्रिद्वयाऽभ्यनुज्ञाऽसम्भवाद् इति **मेधातिथिः** प्रोक्तवान् । युक्तञ्चैतदेव; पञ्चाशद्वर्षतः पूर्वं वानप्रस्थं जिगमिषोर्गृहस्थस्योत्पन्नविद्यमानपुत्रस्याऽप्यनधिकारात् पञ्चाशद्वर्षत उत्तरन्तूत्पन्नविद्यमानपुत्रस्योत्पन्नविनष्टपुत्रस्याऽनुत्पन्नपुत्रस्य च यथातथाविधस्याऽप्यधिकारात्तत्र च पुनर्विशेषतो जितेन्द्रियत्वविधानबलाद्वानप्रस्थाश्रमे पत्न्या सहगमनपक्षे सत्यामपि पत्न्यां रजस्वलायां पुत्रार्थं पुनर्गमनस्याऽनावश्यकत्वाद् । अन्यथा तत्रैवाऽऽश्रमे तया सह गमनपक्षे निवृत्तरजस्काया अपि तस्याः सत्यां कामनायां तद्यथाकामित्वस्य पुंसो भाव्यताया नियमसत्त्वात् पुनस्तादृश्यां पुत्रार्थव्यतिरेकेणाऽगमनेऽपि प्रत्यवाय आपद्येत, जितेन्द्रियत्वविधायकशास्त्रञ्च विरुध्येत । एतेन- "यत्र तत्राऽऽश्रमे वसन्" इति मनुवचनस्य कुल्लूकभट्टकृतप्रतिव्याख्यानमनुचिततरमेव ।

यतः खल्वमुमेवाऽर्थं मनसिकृत्वा गार्हस्थ्याद्वानप्रस्थाश्रमं जिगमिषोर्विशेषं सस्मरतुः **शङ्खलिखितौ**-यथा- **अपरार्के**- "पुत्रानुत्पाद्य संस्कृत्य वेदमध्याप्य वृत्तिं विधाय दारैः संयोज्य गुणवति पुत्रे कुटुम्बमावेश्य कृतप्रस्थानलिङ्गो वृत्तिविशेषाननुक्रमेत्, क्रमशो यायावराणां वृत्तिमुपास्य वनमाश्रयेदुत्तरायणे पूर्वपक्षे" इति ।

तथा **मिताक्षरायामपि- पुत्रानुत्पाद्य विधिवद्वृत्तिञ्चैषां प्रकल्पयेत् ॥** इति । अत एव हि पुत्राणामुत्पादन-संस्कार-वृत्तिविधान-दारसंयोजनादिकर्म्मसु स्वातन्त्र्येणाऽधिकारः पुंसामेव, नतु स्त्रीणामपीति समनन्तरपूर्वोक्तशङ्खलिखितवचनेन प्रतिपादितः । एतदेवाऽभिप्रेत्य किल **यमोऽप्यपरार्के** स्मरति स्म यथा-

**उत्पाद्य धर्मतः पुत्रानिष्ट्वा यज्ञैश्च शक्तितः ।**
**दृष्ट्वाऽपत्यस्य चापत्यं ब्राह्मणोरण्यमाश्रयेत् ॥** इति ।

अत्र हि ब्राह्मणग्रहणस्य त्रैवर्णिकोपलक्षणार्थत्वम्; ब्रह्मचर्य्यानन्तरमपि त्रैवर्णिकानामविशेषेण वानप्रस्थाश्रमस्वीकारविधानात् ।

यथा **मिताक्षरायां** स्मृत्यन्तरवचनम्- "अविप्लुतब्रह्मचर्य्यो यमिच्छेत्तु तमाविशेत्" ॥ इति । ततश्चैवं **यम**वचनेन त्रैवर्णिकानामेव

पुत्रोत्पादनादिपूर्वकवानप्रस्थाश्रमाधिकारो नतु तत्स्त्रीणामपीति स्पष्टं प्रतीयते; यतः स्मरन्ति स्मृतिकाराः- तत्र तावदपरार्के **दक्षः**-

**भरणं पोष्यवर्गस्य प्रशस्तं स्वर्गसाधनम् ।**

**नरकः पीडने चास्य तस्माद्यत्नेन तं भरेत् ॥ इति ।**

तथा- **ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत् ।**

**अनपाकृत्य मोक्षन्तु सेवमानो व्रजत्यधः ॥६।३५॥**

**अधीत्य विधिवद्वेदान् पुत्राँश्चोत्पाद्य धर्मतः ।**

**इष्ट्वा च शक्तितो यज्ञैर्मनो मोक्षे निवेशयेत् ॥ ६।३६॥**

**अनधीत्य द्विजो वेदाननुत्पाद्य तथा सुतान् ।**

**अनिष्ट्वा चैव यज्ञैश्च मोक्षमिच्छन्व्रजत्यधः ॥६॥३७॥** इति **मनु**रपि ।

ततश्चैवमृणत्रयापाकरणनियमः पुंसामेव, नतु स्त्रीणामपीति च स्पष्टं प्रतीयते । अत एव हि-

**सप्त वित्तागमा धर्म्या दायो लाभः क्रयो जयः ।**

**प्रयोगः कर्मयोगश्च सत्प्रतिग्रह एव च ॥**

इत्यादिप्रतिपादितधनार्जननियमः, तथास्मृत्यन्तरप्रतिपादितविद्यार्जननियमश्चापि पुंसामेव, नतु स्त्रीणामपीति चाऽवगम्यते ।

अत एव, आश्रमसमुच्चयपक्षे चतुर्थाश्रमे परिव्रज्यारूपे पत्नीपुत्रादीनां सर्वेषामेव परित्यागः प्रोक्तो **बाष्कलेन मिताक्षरायां** यथा-

**कुटुम्बं पुत्रदाराँश्च वेदाङ्गानि च सर्वशः ।**

**केशान्यज्ञोपवीताँश्च त्यक्त्वा गूढश्चरेन्मुनिः** इति ।

एवम्, द्वितीयाश्रमात्तृतीयाश्रमे पत्न्या सह गतस्याऽपि सप्ततिवर्षत ऊर्ध्वन्तु **स्त्रीणाञ्चैके** इति **मिताक्षरायां बौधायनेन** स्त्रीणामपि प्रव्रज्यारूपस्य चतुर्थाश्रमस्य पाक्षिकत्वस्मरणात् कथंकथञ्चित् पत्न्या च तत्स्वीकारपक्षेऽपि नहि तत्र चतुर्थाश्रमे पुनर्दम्पत्योः किमपि साहित्यमपेक्ष्यते, प्रत्युत राहित्यमेव; प्रव्रजितस्य प्रव्रजितान्तरेण पत्नीजनेनाऽप्यसहाऽवस्थानोपदेशात्; यतः स्मरतिस्म **याज्ञवल्क्यः**-

**सर्वभूतहितः शान्तस्त्रिदण्डी सकमण्डलुः ।**

**एकारामः परिव्रज्य भिक्षार्थी ग्राममाश्रयेत् ३॥५८॥** इति ।

अत्र **ह्येकाराम** इत्यस्य- प्रव्रजितस्य प्रव्रजितान्तरेण पत्नीजनेनाप्यसहायत्वावस्थानार्थकत्वात् प्रव्रजितस्य प्रव्रजितयाऽपि पत्न्या सहैकत्राऽवस्थानं प्रतिषिद्धम् । तथा चैवं स्थितौ-

ऋणत्रयापाकरणनियमपुरःसरप्रव्रज्यानियमप्रधानाधिकारः पुंवन्न स्त्रीणामपीति नहि धर्मार्थकाममोक्षाणां "**स्त्र्यर्थत्व**"मपितु-**पुरुषार्थत्व**मेवेति पूर्वतरमस्माभिः प्रतिपादितमेव । यतः खलु-

**स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा ॥**

इत्यादिना वैदिकमन्त्राऽनधिकारप्रदर्शनपुरःसरं स्त्रीणां शूद्रसाधर्म्यं प्रतिपादितम् । ततश्चैवं शूद्रसाधर्म्यवतीनां स्त्रीणां वैदिकमन्त्रानधिकारात्तदेकसाध्येषु श्रौतस्मार्तकर्मकलापेष्वनधिकारोऽप्युपपन्न एव ।

विवाहे वैदिकमन्त्रपाठस्याऽग्निहोत्रादौ पतिसाधर्म्यस्य चाधिकारस्तु निषादस्थपतीष्टिन्यायेनैव समुपपद्यते । न चैतावतैव स्त्रीणां सर्वत्रैव वेदेऽधिकारः कल्पयितुं शक्यते, तथात्वे निषादानामपि तथाऽधिकारापत्तेः, न च स युक्तः, तस्मान्नैषोऽपि युक्तः ।

ननु चैवं स्त्रीणां शूद्रसाधर्म्यातिदेशः कथमुपपद्यते ? ततश्च तासां पुनः शूद्रसाधर्म्यातिदेशमात्रेणैकजातित्वसाम्ये शूद्राणामनधिकारः स्त्रीणान्तु पुनरधिकार इति वैषम्यञ्चापि कथन्नामोपपद्येत ? तथा हि तत्र तावत् खलु शूद्राणां न केवलं वेदस्याध्ययने प्रतिषेधः, अपितु, तच्छ्रवणे तदर्थज्ञाने तदर्थानुष्ठाने चापि । तथा चोत्तरमीमांसायां सूत्रयाञ्चकार भगवान् **बादरायणः- श्रवणाध्ययनार्थप्रतिषेधात् स्मृतेश्च** (१/३/३८) इति । पुनस्तत्रैव **शारीरकभाष्ये**ऽपि, तथा **श्रुतिः- अथास्य वेदमुपशृण्वतस्त्रपुजतुभ्यां श्रोत्रप्रपूरणम्** इति; **यद्यु ह वा एतत् श्मशानं यच्छूद्रस्तस्माच्छूद्रसमीपे नाध्येतव्यम्** इति; **भवति चोच्चारणे जिह्वाच्छेदो धारणे शरीरभेदः** इति च । अत एव पूर्वमीमांसायां शूद्राणामधिकारनिराकरणाधिकरणे **भगवाञ्जैमिनिरपि** "अवैद्यत्वादभावः-कर्मणि स्यात्" (६।१।३७) "तथा चान्यार्थदर्शनम्" (६।१।३८) इति । स्त्रीणान्तु खलु तावत्तत्रैव पूर्वमीमांसायाम्, अनधिकार-निराकरणाधिकरणन्यायोपस्थापकैः "जातिं तु बादरायणोऽविशेषात् तस्मात् स्त्र्यपि प्रतीयेत जात्यर्थस्याविशिष्टत्वात्" (६।१। ८), "फलोत्साहाविशेषात्" (६।१।१३) "अर्थेन च समवेतत्वात्" (६।१।१४), "फलार्थित्वात्तु स्वामिसम्बन्धेनाभिसम्बन्धः" (६।१।२०) इत्येतैः सूत्रैः पुनर्भगवता **जैमिनिना** स्त्रीपुंसयोर्जात्यर्थस्याविशेषं प्रतिपाद्य वैदिके कर्मणि पुंसामिवाधिकारः प्रदर्शितः । अत एव खलु **जातेरस्त्रीविषयादयोपधात्** इति सूत्रभाष्ये जातिलक्षणकथनावसरे पठितस्य "अपत्यप्रत्ययान्तैः शाखाध्येतृवाची च जातिवाचकः" इत्यर्थकस्य "गोत्रं च

चरणै: सह:" इति जातिनिर्वचनतृतीयलक्षणात्मकवार्तिकस्य "कठी, बह्वृची, अध्वर्यु:" इत्युदाहरणानि स्त्रीणां वेदाध्ययनमन्तरेण नोपपन्नानि भवन्ति । तथा- **इङश्च** (३।३।२१), **अपादाने स्त्रियामुपसंख्यानं तदन्ताच्च वा ङीष्** इति सूत्रवार्तिकस्य उपेत्याधीयतेस्या: **उपाध्यायी, उपाध्याया** इत्येवं भाष्योदाहरणमपि स्त्रीणां वेदवेदाङ्गाध्ययनाध्यापने अन्तरेण नोपपन्नं भवति । एवम्, काशकृत्स्निना प्रोक्ता मीमांसा काशकृत्स्नी, काशकृत्स्नीमधीते काशकृत्स्ना ब्राह्मणी । अध्येत्र्यामभिधेयायामण ईकारेण भवितव्यम् इति, तथा "कथं हि स्त्री नाम सभायां साध्वी स्यात्" इति च तत्र तत्र महाभाष्योक्तिरपि स्त्रीणां वेदवेदाङ्गाध्ययनाध्यापने अन्तरेण नोपपन्ने भवत: । तथा चैतदन्यथानुपपत्त्यैव च स्त्रीणां वेदवेदाङ्गाध्ययनाध्यापनयो: पुंवदधिकार: कल्पनीयो भवत्येव । किञ्च, **वैवाहिको विधि: स्त्रीणामौपनायनिक: पर:** इत्युक्ते: स्त्रीणां विवाह उपनयनस्थानीय:, अतस्तद्दिन एव **पतिरेव गुरु: स्त्रीणाम्, पतिसेवा गुरौ वासो गृहार्थोऽग्निपरिक्रिया** इति वचनाद्, **अहतेन वसनेन पति: परिदध्याद्या अकृन्त**न्नित्येतयर्चा, परिधत्स्व वाससेति च प्रावृतां यज्ञोपवीतिनीमभ्युदानयञ्जपेत् सोमोऽददद् गन्धर्वायेति गोभिलगृह्यसूत्रतो यज्ञोपवीतधारणं वशिष्ठस्मृतावेकविंशेऽध्याये तत्प्रायश्चित्तार्थं स्त्रीणामपि गायत्रीजपहोमविधानस्यान्यथानुपपत्त्या गायत्र्या अङ्गीकारस्य पत्यैव कर्तव्यत्वात्;

**पुराकल्पे तु नारीणां मौञ्जीबन्धनमिष्यते ।**

**अध्यापनं च वेदानां सावित्र्या वचनं तथा ॥** इति

**यम**वचनेनापि णिजर्थभूतप्रयोजकत्वस्यास्मिन् कल्पे निषेधेऽपि धात्वर्थव्यापाराश्रयत्वरूपप्रयोज्यत्वस्यानिषेधाच्च यथावकाशं साङ्गस्य स्वशाखीयवेदस्य पत्यैव पत्न्या अध्यापनीयत्वं स्पष्टमवगम्यते । अत एवाग्निहोत्रादौ पत्न्यास्तत्तन्मन्त्रपाठ: संस्कृतोक्तिश्चैतद्द्वयमपि सिध्यति । अन्यथा **याज्ञे कर्मणि नापभाषन्ते** इति महाभाष्योक्त्या **यज्ञ**कर्मण्यपशब्दनिषेधेन संस्कृतेनैव यज्ञगतैर्वक्तव्यतया तत्तदुक्तेतिकर्तव्यताज्ञानस्य व्याकरणाध्ययनमन्तराऽनुपपन्नत्वेन पत्याद्युक्तसंस्कृतशब्दस्याबोधे सकलं कर्मैव भ्रष्टं भवेत् । तदेवम्, वेदवेदाङ्गाध्ययनाध्यापनयो: पुंवदधिकृतानां स्त्रीणां श्रवणमात्रेऽपि निषिद्धस्य शूद्रापरपर्यायस्यैकजाते: साधर्म्यातिदेश: कथङ्कारं युक्त: कथञ्च वा पुनस्तासां शूद्रसाधर्म्यातिदेशमात्रेणैकजातित्वम्? कथञ्च वा नाम

विवाहाग्निहोत्रादौ **वैदिकमन्त्रपाठपतिसाधर्म्ययोरपि** निषादस्थपतीष्टिन्यायेनाधिकारकल्पनया सर्वत्र वेदेऽनधिकारः कल्प्यते ? इति चेदत्रैवं प्रतिब्रूमः-

स्त्रीणां खलु तावदस्मदुक्तरीत्यैव वास्तविकद्विजातित्वाभावेन प्रत्युतैकजातेः साधर्म्यातिदेशादेकजातितुल्यतयैकजातित्वव्यहारेऽपि न शूद्रापरपर्यायवास्तविकैकजातित्वम्, नापि पुनर्वास्तविकद्विजातित्वमपि, तासां हि द्विजात्येकजातिभिन्नत्वविशिष्टद्विजात्येकजातिगतयत्किञ्चिद्धर्मवत्त्वाभ्युपगन्तव्यत्वात्, तद्भिन्नस्यैव तद्गतयत्किञ्चिद्धर्मवतस्तुल्यत्वप्रसिद्धेः । तथा च **स्त्रीशूद्रास्तु सधर्माणः** इत्याद्युक्तेः शूद्रापरपर्यायैकजातिभिन्नत्वशिशिष्टतद्गतसकलवेदानधिकाररूपयत्किञ्चिद्धर्मवत्त्वात्, सहाधिकारश्रुत्या **यज्ञेषु मन्त्रवत्पत्नी** इत्यादिस्मृत्याऽत एव "पत्नी"शब्दस्य **पत्युर्नो यज्ञसंयोगे** इति भगवता **पाणिनिनापि** स्वामिवचनत्वेन व्युत्पादिततया च द्विजातिभिन्नत्वविशिष्टतद्गतवैवाहिकवैदिकमन्त्रपाठाग्निहोत्रादिसहाधिकाररूपयत्किञ्चिद्धर्मवत्वाच्च स्त्रीणां वास्तविकद्विजातित्वैकजातित्वोभयाभावेऽपि वैवाहिकवैदिकमन्त्रपाठाग्निहोत्रादिसहाधिकारबलाद् द्विजातितुल्यत्वेन द्विजातित्वव्यवहारस्येव शूद्रापरपर्यायैकजातेः साधर्म्यातिदेशेन सकलवेदानधिकारादेकजातितुल्यत्वेनैकजातित्वव्यवहारस्यापि चोभयस्यैवापि तुल्यन्यायादुपपत्तिः सुसङ्गता भवत्येव । अत एव खलु "कठी, बह्वृची, अध्वर्युः", "काशकृत्स्ना ब्राह्मणी," "उपेत्याधीयतेऽस्या उपाध्यायी उपाध्याया वा" इत्यादिपूर्वोक्तसूत्रवार्तिकमहाभाष्योदाहृतप्रयोगतत्तदुक्त्युपपत्तिरपि स्त्रीणां समनन्तरपूर्वोक्तरीत्या शूद्रापरपर्यायैकजातिसाधर्म्येणैकजातितुल्यत्वव्यवहारेऽपि पुनर्वास्तविकैकमात्रजातित्वाभावेन, तथा द्विजातिभिन्नत्वेऽपि प्रत्युत पुनर्द्विजातितुल्यत्वेन तु व्यवहर्तुमवश्यशक्यतयाऽथ चास्मदुक्तपूर्वरीत्या तासामनुद्भूताया अत एव सूक्ष्मरूपेणावस्थिताया आत्मनिष्ठानिर्वचनीययत्किञ्चिद्द्वितीयजात्यादिशक्तेः सत्ताया एवापि चावश्यं स्वीकर्तव्यत्वेन पूर्वोक्तगोभिलवशिष्ठयमस्मृत्यादिनानावचनबलादुपनीतानां पुराकल्पीयस्त्रीणां पुंवद् वेदवेदाङ्गाध्ययनाध्यापनयोस्तथाधिकारः कल्पयितुं शक्यते, न पुनरिदानीन्तनीनामपि । अत एव हि पूर्वोक्तयमवचने णिजर्थभूतप्रयोजकत्वस्य पुराकल्पीयनारीरूपप्रयोज्यत्वविषयकत्वेनैवोपपत्तौ पुनरिदानीन्तननारीणां धात्वर्थव्यापाराश्रयत्वरूपप्रयोज्यत्वस्यानिषेधकल्पनया स्वशाखीयसाङ्गवेदाध्ययनज्ञापनं नोचितम् ।

पूर्वोक्तगोभिल-गृह्य-वशिष्ठ-यम-स्मृतिवचन-जातेन हि पुराकल्पीयसाग्नित्रैवर्णिकपत्नीकर्मकस्यैवोपनयनपूर्वकस्वशाखीयसाङ्गवेदाध्यापनस्य बोधना-

न्नतु तत्कर्तृकस्यापि तदध्यापनस्य । इदानीन्तनसाग्नित्रैवर्णिकपत्नीनान्तु तथोपनयनविध्यभावेऽपि पुन: "जातिं तु बादरायणोऽविशेषात् तस्मात् स्त्र्यपि प्रतीयेत जात्यर्थस्याविशिष्टत्वात्" इति भगवतो **जैमिने:** स्त्र्यनधिकार-निराकरणाधिकरणन्यायेन सहाधिकारे श्रुतिबलेन च तत्तद्यज्ञकर्मो-पयोगिमात्रवैदिकमन्त्राध्ययनतदर्थज्ञानयोस्तथा "याज्ञे कर्मणि पुनर्नापभाषन्ते" इति महाभाष्योक्तेर्व्याकरणाद्यङ्गाध्ययने चाधिकार: कल्पयितुं शक्यते। निरग्नि-त्रैवर्णिकपत्नीनां पुन: पुराकल्पीयानामिदानीन्तनीनाञ्चोभयविधानामपि वैवाहिकवैदिकमन्त्रपाठाधिकारस्तु निषादस्थपतीष्टिन्यायेनैवेत्येव हि स्त्रीणां सर्वत्र वेदेऽनधिकार: कल्प्यते नान्यथा **स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा** इति पूर्वतरोदाहृतस्मृतेर्जागरूकत्वेन तदेकवाक्यत्वकर्तव्यतया विधिमन्तरेण यदृच्छयैवाद्यत्वे पुनर्निरग्नित्रैवर्णिकब्रुवस्त्रीणां श्रवणेऽप्यनौचित्य-कल्पनावश्यकत्वादितीत्थं खलु स्त्रीणां शूद्रसाधर्म्यातिदेश: शूद्रवैषम्यञ्चोभयमपि समुपपद्यत एव, अन्यथा "जातिं तु बादरायणोविशेषात् तस्मात् स्त्र्यपि प्रतीयेत जात्यर्थस्याविशिष्टत्वात्" इत्येवमादिजैमिन्युक्तदिशा जात्यर्थस्याविशिष्टत्वेन त्रैवर्णिकस्त्रीणां प्रथमत एव गर्भाधानादिदशसंस्कारकर्मणां पुंवत् समन्त्रकत्वम्, अथ च "अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीत" इत्यादि-विधिबलादष्टमैकादशद्वादशादिषु वर्षेषु यथायथमविशेषत: पुंवदुपनयनपूर्वक-साङ्गवेदाध्यापनब्रह्मचर्यकेशान्तसमावर्तनादिकर्मजातञ्चैतत् सर्वमपि पुरा-कल्पेऽद्यत्वे चावश्यमङ्गीकर्तव्यमापतेत् ।

न चास्ति पुरापि पुन: पुराकल्पीयानामपि साग्नित्रैवर्णिकस्त्रीणां पुंवद् गर्भाधानादिसंस्कारकर्मणां विवाहवर्जं समन्त्रकत्वं कर्तव्यमितीदानीतनीनान्तु पुरनद्यत्वे किं वक्तव्यम् ? सति तु तथात्वे "तूष्णीमेता: क्रिया: स्त्रीणां विवाहस्तु समन्त्रक:" इत्येवमादियाज्ञवल्क्यादिस्मृतयस्तन्मूलभूता इतरा: श्रुतयश्च सर्वा अपि विरुध्येरन् । तदित्थमस्मदुक्तं न किञ्चिद-वद्यमित्युचिततरमेव ।

अपिच, अत एव स्त्रीणां सुरापान- व्याधि- विसंवादात्मकधौर्त्य-बन्ध्यात्वाऽर्थनाशित्वा-प्रियंवदात्व-स्त्रीप्रसूत्व-मृतप्रजात्वपुरुषद्वेषशीलादिदोषाणां व्यष्टिमात्रसत्त्वेऽपि तदीयतादृशदोषसद्भावस्य पुंसां पुरुषार्थ-चतुष्टयसिद्धे: प्रतिबन्धकतया तदीयानां पुंसां पुनस्तदधिवेदनोपदेशं स्मरतिस्म **याज्ञवल्क्यो** यथा-

**सुरापी व्याधिता धूर्ता बन्ध्यार्थघ्न्यप्रियंवदा ।**
**स्त्रीप्रसूश्चाधिवेत्तव्या पुरुषद्वेषिणी तथा । १।७३॥** इति ।

तथा **मनुरपि-**

**मद्यपाऽसाधुवृत्ता च प्रतिकूला च या भवेत् ।**
**व्याधिता वाधिवेत्तव्या हिंस्रार्थघ्नी च सर्वदा । ९।८०॥**
**बन्ध्याष्टमेऽधिवेत्तव्या दशमे तु मृतप्रजा ।**
**एकादशे स्त्री जननी सद्यस्त्वप्रियवादिनी । ९।८१॥**
**या रोगिणी स्यात्तु हिता संपन्ना चैव शीलतः ।**
**सानुज्ञाप्याऽधिवेत्तव्या नाऽवमान्या च कर्हिचित्** । ९।८२। इति ।

अत एव, **अपरार्के- आपस्तम्बः-** "धर्मप्रजासंपन्ने दारे नान्यान्कुर्वीतान्यतरापाये तु कुर्वीत, प्रागग्न्याधेयादाधाने हि सती कर्मभिः संबध्यते" ॥ इति प्रोक्तवान् ।

तदेवम्- स्त्रीणामात्मनिष्ठानिर्वचनीयानुद्भूतजात्यादिशक्तिविशेषस्य साकल्येनासत्तया सत एवानुद्भूतस्य तस्याभिव्यञ्जकानां समन्त्रकाणां गर्भाधानादिदशकर्मणां पूर्वसप्तकस्य निर्मन्त्रकतया विशेषतोऽष्टमनवमयोस्त्वनुत्पत्त्यैव च केवलदशमसंस्कारसमन्त्रकत्वमात्रेणाऽभिव्यञ्जितस्य सत एवाऽपि तस्य यत्किञ्चिन्मात्रत्वेनाऽनुद्भूतप्रायतया तदन्तर्गतस्य सतोऽप्यसत इवाऽवभासमानस्य द्विजातित्वस्याऽपि साकल्येनाऽनुत्पत्तेः शूद्रवदेकस्या एव जातेरभिव्यक्ततयैकजातिमात्रत्वाद्,

अथ च पुत्राणामुत्पादन -संस्कार- वृत्तिविधान-दारसंयोजनादिकर्मसु, तथा- विद्याधनार्जननियमविशेषेषु, पुनरेवमृणत्रयापाकरणनियमपुरःसरस्वीकरणीये तृतीये चाश्रमे नियमतः स्वातन्त्र्येणानधिकाराद्, अपि च तुरीयेऽप्याश्रमे स्वातन्त्र्येणाऽधिकारस्य चैच्छिकपाक्षिकत्वेन नियमावश्यकत्वाभावाद्, अथ चापि तत्र तस्य पतिसाहित्यानपेक्ष्यत्वेन प्रत्युत तद्राहित्यस्यैवाऽपेक्ष्यतया प्राधान्येनाऽनधिकारात्, किञ्च केवले द्वितीयाश्रमे तदीयसुरापानादिपूर्वोक्तनानादोषव्यष्टिमात्रसत्ताया अपि पुंसां पुरुषार्थचतुष्टयसिद्धेः प्रतिबन्धकत्वेन तदीयानां पुरुषाणां पुनस्तदधिवेदनाऽधिकारवत्तदीय-पुरुषाणां तत्त्वसाम्यसत्त्वेऽपि पुनस्तासां पत्यन्तरपरिग्रहाऽधिकाराऽभावाच्चैवमादिनानाकारणकलापवशात्पुंवत्सामर्थ्यसत्ताया अभावाच्चाऽत एव किलाऽबलानां तासां कथंकथमपि पुमधिकारसाकल्यसाधर्म्यसत्ताया अभावेनैवाऽन्याय्यत्वाद्,

अथ च- पुंसामपि विनैव कारणं यदृच्छयैवाऽधिवेदने निषेधात्, एवं सति तु कारणे कथञ्चित्तथाऽधिवेदनेऽपि स्त्रीणां तत्सोढव्यत्वेन पुरुषान्तराश्रयणे विशेषतो निषेधस्मरणाच्च ।

अथापि च यद्यपि ब्रह्मचर्य्यादिचतुराश्रमेषु, प्रथमे, तृतीये, चतुर्थे चाश्रमेऽ पत्यस्य प्रयोजनमेव न विद्यते, किन्तु द्वितीये गार्हस्थ्य एव तस्य प्रयोजनसद्भावात्, तत्राऽ पि विचित्रेस्मिन्दु:खमये संसारे स्वकृतप्राक्तनदुष्कर्म-वशतो नानोपायविशेषैरपि कथंकथमप्यजातपुत्रत्वेन, मृतपुत्रत्वेन वा दत्तकपरिग्रहात्मकपुत्रान्तरकरणे स्त्रीणां भर्त्रनुज्ञासापेक्षत्ववन्न पुनः पुंसामपि तथा स्त्र्यनुज्ञासापेक्षत्वम्; स्वातन्त्र्येण तेषामधिकारसद्भावात्, स्त्रीणान्तु तथाऽधिकाराऽसद्भावाच्च ।

अथ च- पुनस्तेनैव स्वकृतप्राक्तनकर्मवशेन दत्तकादिपुत्राणामपि परिग्रहाद्यसंभवेनाऽ प्यपुत्राणां येषां केषाञ्चिदेकमातापितृकभ्रातृपुत्रेणापि पुत्रित्वस्मरणात्तथा व्यवहारपरिदृश्यमानत्वाच्चैतादृक्स्थले त्वपत्यार्थं स्त्रीपुंसयो-रविनाभावाऽ विशेषाऽ नुभवाऽ संभवात्कथञ्चित्तस्याऽ प्यभावे परमेश्वरा-राधनादिनैवापि पारत्रिकदुर्गतेरनुत्पत्तेश्च स्त्रीपुंसयोरविनाभावस्याऽ पि क्वचिद्दर्शनाद्- नाऽ पत्यार्थं सर्वत्र स्त्रीपुंसयोरविनाभावाविशेषाऽनुभवस्य साम्ये हेतुत्वम् ।

एतेनैव- अपत्यं प्रति जनकताऽवैषम्यात्स्वत्वप्रभुत्वयोरप्यनिर्विशेषेण तस्य दानादावप्युभयोरधिकारमुख्यत्वस्य तदभावेऽपुत्रत्व-जन्यगत्यभावादिदोष-विशेषस्य, तत्परिहाराय दत्तकपरिग्रहादावधिकाराविशेषस्य च स्त्रीपुंसयोः साम्ये हेतुत्वेनोपन्यासः सुतरां निरस्त एव ।

किञ्च- **अनाश्रमी न तिष्ठेत दिनमेकमपि द्विजः** इति**मिताक्षरायां** दक्षस्मृतिबोधितस्त्रैवर्णिकविषयकोऽनाश्रमित्वदोषोऽ पि पुंसामेव, नतु स्त्रीणामपि; पत्युः प्रयाणोत्तरमतत्सहानुगमनपक्षे विधवानामपि पुंसामिव मृतपत्नीकानामनाश्रमित्वसाम्यसत्तया तुल्यन्यायादनाश्रमित्वापनुत्त्यर्थ-मपि द्वितीयविवाहः स्वीकर्तव्यो भवेत् ।

न चेष्टापत्तिः, उपरिष्टात्प्रदर्शयिष्यमाणवैधव्यधर्मपरिपालन-पूर्वकजीवनयापनबोधकनानाश्रुतिस्मृतिप्रभृतिवचनजातविरोधात् । अपिच- यथा खलु- त्रैवर्णिकविषये- "ब्रह्मचर्य्यं परिसमाप्य गृही भवेद्, गृही भूत्वा वनी भवेद्, वनी भूत्वा प्रव्रजेद्, यदि वेतरथा ब्रह्मचर्य्यादेव प्रव्रजेद्, गृहाद्वा, वनाद्वा ।" इति **मिताक्षरायामपरार्के** च जावालश्रुतेः, तथा- **मिताक्षरायाम्** "अविप्लुतब्रह्मचर्य्यो यमिच्छेत्तु तमावसेद्" इतिस्मृत्यन्तरवचनात्, तथा- पुनरेव-**मपरार्के-** "यदहरेव विरजेत्तदहरेव प्रव्रजेद्" इतिश्रुतेः, तथा- "ऋणत्रयमपाकृत्य निर्ममो निरहंकृतिः । ब्राह्मणः क्षत्रियो वापि वैश्यो वा

प्रव्रजेद् गृहाद्" **इत्यपरार्के** स्मृत्यन्तरवचनाच्च ब्रह्मचर्य्यादिचतुराश्रम-समुच्चयविकल्पपक्षौ पुंसामेव साकल्येन नियमितौ, नतु स्त्रीणामपि । किन्तु केवलं तासां ब्रह्मवादिनीनामुपनयनाग्नीन्धनवेदाध्ययनस्वगृहभैक्ष्यचर्य्यारूप-नैष्ठिकब्रह्मचर्य्यात्मकमैकाश्रम्यमात्रम्, सद्योवधूनामपि पुनस्तासामुपनयन-पूर्वकविवाहरूपगार्हस्थ्यात्मकमैकाश्रम्यमात्रम्- इत्येवंरूपमपि पुराकल्प एव । कलौ तु पुनः सर्वासामेव स्त्रीणां पृथगुपनयनवर्जितोपनयनस्थानीय-विवाहरूपमात्रगार्हस्थ्यात्मकमैकाश्रम्यम् । यदाह **मनुः**- "वैवाहिको विधिः स्त्रीणामौपनायनिकः परः । पतिसेवा गुरौ वासो गृहार्थोग्निपरिक्रिया ।२।६७॥ इति । तथा च पुराकल्पीयब्रह्मवादिनीतरासां सर्वासां स्त्रीणां विवाहात् पूर्वं पुमसम्प्रयोगाद्यभक्ष्याभक्षणाद्यात्मकयत्किञ्चिद्ब्रह्मचर्यस्य नियमावश्यकत्वेपि न पुनः पुंवत् संस्कारपूर्वकस्य ब्रह्मचर्याश्रमस्य साकल्येन स्वीकारः क्वचित् केनचिद् विहितः । एवञ्च वानप्रस्थाश्रमेपि स्त्रीणां स्वातन्त्र्येण न नियमतोधिकारः, अपितु पतिपरिचर्याभिलाषेण पत्या सहानुगमनपक्षे तत्साहित्यमात्रम्, इत्यस्माभिः पूर्वत्र प्रतिपादितमेव । तथा सन्यासाश्रमेपि "स्त्रीणाञ्चैके" इति **मिताक्षरायां** बौधायनवचनात् पत्या सहानुगमनपक्षे सत्यामेव विरक्तौ वानप्रस्थादेव स्वातन्त्र्येणाधिकारस्यैच्छिकपाक्षिकत्वसद्भावेपि न पुनर्गार्हस्थ्यात्, पत्युर्वानप्रस्थाश्रमस्वीकारात् पूर्वम् तत्परिचर्याद्यर्थं सहावस्थानविधिबलादेव, तदुत्तरमतत्सहानुगमनपक्षे तु **सुतविन्यस्तपत्नीकः** इत्यादिपुत्रपत्नीनिक्षेपविधिबलादेव च तदपरोधात् । न च पत्युः प्रयाणोत्तरं सत्याम् विरक्तौ विधवानामपि गार्हस्थ्यात् सन्यासेऽधिकारः, तदानीं खलु तादृश्या विरक्ताया अकातराया मृतस्य पत्युः सहानुगमनमात्रविधानाद्, अविरक्तायास्तु कातरायाः पुनर्वैधव्यधर्मपालनात्मकचित्तवृत्तिनिरोधद्वारा शनैः शनैर्वैराग्यसम्पादनेन निःश्रेयससाधनविधानाच्च । एतच्च सर्वमुपरिष्टाद् यथावत् प्रपञ्चयिष्यते । तदेवं खलु त्रैवर्णिकविषयेऽ नाश्रमित्वनिषेधो ब्रह्मचर्यादि-चतुराश्रमसमुच्चयविकल्पान्यतरस्वीकारश्च पुंसामेव न पुनः स्त्रीणामपीति न कथंकथमपि स्त्रीपुंसयोः साम्यम् ।

न च मन्तव्यं रत्यर्थमिति, रतिजन्यौपस्थसुखात्मककार्य्य-कारिणौषधविशेषादिप्रयोगादिनापि तत्सिद्धेः, अपि च- विधवानां तन्निषेधेनैव तत्त्वसत्त्वस्याप्यकिञ्चित्करत्वात् ।

अथ च- अत एव पुंसां मरण-प्रणाश-प्रमाद-पतन-संन्यासा-चिकित्स्यरोगग्रासा-कारणपरित्यागादिनानाकारणकलापसमुच्चयव्यस्तवशाद-

पतिकानां "विधवे"त्यपराभिधानभाजामबलानां तथा कारणावशादपरिग्रहाणां पुंसामिव पुनर्विवाहे निराबाधस्य तुल्यन्याय्यत्वनिर्विषयत्वेन तत्रार्थे दण्डापूपिक-कैमुतिकन्याययोरप्यसद्भावाच्चैवमपरञ्च- स्त्रीणामपत्योत्पादनात्मकैकदृष्ट-प्रयोजनकत्ववद् गार्हस्थ्यधर्माभिरक्षणात्मकदृष्टप्रयोजनान्तरकत्वस्यापि सत्तया, अथ च वस्तुतो ह्यदृष्टैकप्रयोजनकत्वस्योत्तरत्र प्रपञ्चयिष्यमाणतयाऽ पि सधवानां, विधवानाञ्च विवाहे तदभिरक्षणाऽ सम्भवेन तदर्थमपि पुनर्विवाहनिषेधस्यात्यावश्यकत्वाङ्गीकर्तव्यत्वात्,

तथैवम्- अत्रार्थे विचारान्तरोन्नयने यत्रतत्र सर्वत्रैव दोषबाहुल्यसद्भावाच्च- प्रत्युत परमतमवलम्ब्यैव न्यायं, धर्मञ्च दूरतः परित्यज्याऽ पि नियमपक्षस्वीकारे तु सर्वत्र सर्वदा विधवानां, सधवानाञ्च पुनर्विवाहस्य याथाकाम्यनियम्यतया पशुपक्षिवत्साङ्कर्यं प्रसज्येत । सति तु तथा **को वा कस्याः पतिः, का वा कस्य स्त्री, को वा कस्य पिता, को वा कस्य कश्चे**त्यादिपितापुत्रभावदाम्पत्यप्रभृतिसंबन्धविशेषस्य नियमोपि न स्यात् । एवम्- चातुर्वर्ण्यव्यवस्थापि न भवेत् । को वा धर्मः, को वाऽ धर्म इति तयोर्विवेक एवाऽ पि न भवेत् । तथा च श्रौतस्मातादिधर्माश्च विलुप्येरन् । श्रुतिस्मृतिप्रभृतिशास्त्राणि च विरुध्येरन् । किं बहुना, जगदेव विपरीतं भवेत्- इति सर्वदा सर्वत्राऽ नर्थाऽ ऽ धिक्यमापतेद्- इति तत्र तत्रोपरिष्टात्सप्रमाणं प्रपञ्चयिष्यामः ।

तदेवम्- विधवानां विवाहस्य सर्वथैवान्याय्यत्वमधर्म्यत्वञ्च सर्वै-रेवाङ्गीकर्तव्यं भवत्येव ।

यत्तु- विधवाविवाहे साधकत्वेन समुदाहृतः- **उदीर्ष्व नार्यभिजीवलोकम्** इत्येष ऋग्वेदमन्त्रः, तस्याप्ययमर्थः- स यथा-

"नारि ?-मृतस्य पत्नि ?, जीवलोकम्- जीवानां पुत्रपौत्रादीनां लोकं स्थानं गृहमभिलक्ष्य, उदीर्ष्व-अस्मात्स्थानादुत्तिष्ठ, गतासुम्- अपक्रान्तप्राणमेतं शरीरावशेषेणाऽ वस्थितं पतिम्, उपशेषे-तस्य समीपे स्वपिषि; तस्मात्त्वम्-एहि- आगच्छ, यस्मात्त्वम्-हस्तग्राभस्य-पाणिग्रहीतुः, दिधीषोःधारणपोषणकर्त्तुः-अथ च- गर्भस्य निधातुः, तव-अस्य पत्युः संबन्धादागतम्- इदम्- जनित्वम्-जायात्वम्,अभिलक्ष्य, संबभूथ- संभूताऽ सि, असुसरणनिश्चयमकार्षी-स्तस्मादागच्छ" ॥ इति । ऋक्संहिताया भाष्यकारः **सायणाचार्य्यो** ऽ प्येवमेव व्याचख्यौ । अत्र- "उदीर्ष्व" इति-आदादिकस्य 'ईर' गतावित्यस्य लोटि मध्यमपुरुषैकवचनम् । "जनित्वमभी" तिजनेः "सर्वधातुभ्य इन्" इति कर्तरि-

इन्प्रत्ययगर्भस्य भावार्थकत्वलन्तस्याऽभिशब्दयोगे **अभिप्रतिपर्यनुभ्यः** इति कर्मप्रवचनीयत्वे द्वितीयान्तम् । तथाचैतत्प्रतीयते- मृतस्यानुजननसंभवा-त्पुनर्जातस्य चानुमरण-स्वाभाविकत्वाच्च मृतानुगमनं नातीवोचितम्; यतः स्मरन्ति-

**जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च** ॥ इति ।

ततश्च-कस्याऽनुजिगमिषा तव वर्तते ? पत्युस्तच्छरीरस्य वा ? तत्रापि- कतमः खलु ते पतिः ? शरीरमेतत् ?, तदवच्छिन्नचैतन्यम् ? चैतन्य-मात्रं वा ?- यदि चैतन्यमात्रं ते पतिस्तर्हि- चैतन्यस्य नित्यत्वान्न तस्य कदाचन विनश्वरत्वम्, जनिमत्त्वञ्चेति न स ते पतिर्मृतः, तथा च- श्रुतिः-

**न जायते म्रियते वा कदाचिन्नायं भूत्वा भविता वा न भूयः ।**
**अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे ॥**

इति । एवञ्चैवंविधं विजानन्त्यपि पुनः कमनुगच्छसि ?, यदि शरीरावच्छिन्नं चैतन्यं ते पतिस्तर्ह्यपि तयोर्विभागान्नैकतरो भवितुं पतिस्तेऽर्हति, उत-तद्विरहितमपि शरीरमेतत्ते पतिस्तर्ह्येवं किमनुजिगमिषन्तीं भवतीं विलोक्याऽपि न चेष्टते, यदि तु पत्युः सम्बन्धित्वेन शरीरस्याऽनुजिगमिषा ते तर्हि ? तादृशाः संबन्धिनोऽन्येऽपि पदार्थाः सन्त्येवेति किमिति तान्नानुगच्छसि ?, अतश्चैवम्- स्थूलशरीरवियुक्तस्यापि लिङ्गशरीरावच्छिन्नस्यात्मीयशुभाशुभकर्मवशादेव जीवभावमापन्नस्यास्य चैतन्य-स्य त्यजतोऽपि स्थूलशरीरं शरीरान्तरं प्रविष्टस्य पुनरनुजननसंभवाज्जीवतां पुत्रपौत्रादीनामभिरक्षणद्वारा, पातिव्रत्यादिधर्म्मपालनद्वारा च तदर्थं तद्धिताचरणाय चोत्तिष्ठाऽऽगच्छ - इत्येवमेवाऽर्थ इत्यादीति ।

किञ्च- **दिधीषोः** इति **डुधाञ्, धारणपोषणयोः** इति धातो रूपम् । तस्य च धारकत्वं, पोषकत्वं, गर्भनिधायकत्वं चेति सामान्योऽर्थः । एवम्- "हस्तग्राभस्य, इति "हस्ते"त्युपपदस्य "ग्रह" उपादाने" इत्यस्य धातोः कर्तरि कृत्प्रत्ययान्तस्य रूपम् । तस्य च "हस्तग्राहकः"- इति सामान्योर्थः, ततश्चाऽत्राऽस्य पदद्वयस्य सामाना-धिरण्येनाऽन्वये- "यः पाणिग्रहीता स एव धारकः, पोषको, गर्भनिधायकश्चेति," "यो धारकः, पोषको, गर्भनिधायकश्च स एव पाणिग्रहीता" इति चैवं द्विधाऽर्थः पर्य्यवस्यति । तत्र- यदि "यः पाणिग्रहीता स एव धारकः, पोषको, गर्भनिधायकश्चे" ति प्राथमिकोऽर्थोऽङ्गीक्रियते ?,

तर्ह्येवं न युष्माकमभिप्रेतार्थसिद्धिः, प्रत्युत-अर्थान्तरदोषापातश्च; देवरादेः प्राथमिकपाणि-ग्रहीतृत्वाभावेन तत्पूर्वं पत्युरेव तत्त्वसद्भावात्- तस्यैव धारकत्वपोषकत्वगर्भ-निधायकत्वनियमान्न पुनर्देवरादेस्तथात्वमिति विधवाया देवरादिषु नियोगं सिद्धान्तयद्भिर्भवद्भिः प्रदिर्शितप्रमाणात्परेतेऽपि पत्यौ तस्या धारणपोषणगर्भनिधानादिना रक्षणे देवरादेरनधिकारःसिद्धः, किं पुनस्ततो नियोगकथा ।

यदि तु "यो धारकः, पोषको गर्भनिधायकश्च स एव पाणिग्रहीता" इति **द्वैतीयिकोर्थोभ्युपगम्यते**, तर्ह्येवमपि देवरादेस्तथात्वाभावेन न पुनः पाणिग्रहणेऽधिकारः, प्रत्युत अत्रापि पक्षे पूर्ववदर्थान्तरदोषसंभवः; जन्मतः प्रभृति पित्रोर्गर्भनिधायकत्वेतरतत्त्वसत्वात् पितैव पुनः पाणिग्रहणेधिक्रियेत, किंवा- यः पालकः स एवाधिक्रियेत, न पुनर्देवरादिरिति कुतस्तत्र नियोगकथा ।

न चैतद्भवतामपि नियोगमनङ्गीकुर्वता सनातनैकधर्मावलम्बिनां समानमिति वाच्यम्, प्राथमिकार्थस्याऽङ्गीकारे पाणिग्रहणात्पूर्वं पित्रादेर्धारकत्वपोषकत्वयोरधिकारसत्त्वेऽपि गर्भनिधानाऽनधिकारात्प्रत्युत- तदुत्तरं यावज्जीवं पाणिग्रहीतुरेव समस्तेऽपि तत्त्वेऽधिकारान्न्याय्यत्वाच्चाऽत एव पाणिग्रहीतुरेव धारकत्वपोषकत्वगर्भनिधायकत्वादिना "पतिः, भर्ता, धवः, प्रियः, स्वामी" इत्यादिनाम्ना व्यपदेशो, न देवरादेः, पित्रादेर्वा । यतो देवरादिस्तन्नाम्नैव व्यपदिश्यते, पित्रादिश्चापि तन्नाम्नैवेति तद्वैषम्याद् । अत एव सूत्रयाञ्चकार **जैमिनिर्मुनिः**-

"**श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां** समवाये पारदौर्बल्यमर्थविप्रकर्षात्" इति । अत्र हि भवतां मतेन लिङ्गप्रकरणाभ्यां नियोगकथापातेऽपि पुनरस्माकं समाख्यारूपप्रमाणस्य जागरूकत्वप्राबल्यान्न नियोगः सिद्धान्त्यते ।

वस्तुतः सनातनैकधर्मावलम्बिनामस्माकन्तु- लिङ्गात्तथापातेऽपि देवरादेर्दिधीषुत्वाभावस्य व्याख्यातपूर्वार्थेभ्यः सुस्पष्टत्वात् ।

अथ च नहि प्रकरणादपि तथापातः, पातिव्रत्यप्रकरणपठितत्वात्तन्मन्त्रस्य । समाख्यारूपस्य षष्ठस्य प्रमाणस्य तु प्रवृत्तिरेव; तदुद्देश्यताऽवच्छेदकत्वसत्त्वात् । अत एव-**ऋक्संहिताभाष्यकारःसायणाचार्य्यो**ऽपि षष्ठ्यन्तदिधीषुपदस्य षष्ठ्यन्तपतिपद एव समन्वयं प्रदर्शयन् "गर्भस्य निधातुः" इत्येवमेव व्याचख्यौ ।

किञ्च- पुन: कथञ्चिद् दिधीषुपदस्य देवरवाचकत्वे साहसिक्यमवलम्ब्यते, तर्ह्येवमपि देवरस्यासत्त्वे कुत्रेयं नियुज्यते ? एवञ्च- दिधीषुपदस्य द्वितीयवरे लक्षणाऽवश्यं कर्तव्या भवति भवद्भिरिति रूढ्या प्रयोजनेन वा क्रियते सेति केनापि स्पृष्टौ- किं प्रत्युच्यते ? रूढ्येति चेन्न; दिधीषुपदस्य द्वितीयवरे तथात्वाऽदर्शनात् । अथ प्रयोजनेनेति चेत् ? किमत्र प्रयोजनमिति तदपि न; तदभावात् ।

किञ्चाऽत्र पुन: कथञ्चिदपि तथा- साहसे देवरसत्त्वे दिधीषुपदस्य तत्रैव लक्षणा, तदभावेऽन्यत्र कुत्रापि तत्पदस्य लक्षणेत्यवश्यमभ्युपगन्तव्यत्वाल्लक्षणपरम्परा स्वीकर्तव्या भवेत्, देवरासत्त्वे ह्यन्यत्र कुत्र नियोग इति नियोगाधिकरणक्रमोऽपि भवद्भि: प्रदर्शनीयो भवेत्, लक्षणापरम्परात्मकदोषमदोषत्वेनाऽङ्गीकुर्वद्भिर्भवद्भिर्नियोगाधिकरणक्रमश्च न प्रदर्शयितुं शक्यते ।

एवञ्च- भवतां वैधव्यधर्मभङ्गकामुकानां यथारुचि कर्तव्यत्वे लोकानां भिन्नरुचित्वेन यत्रकुत्राऽपि चाण्डालादौ च नियोग: कर्तव्य: स्यात् ।

अपिचापरम्- विधवानां नियोग: कतमार्थ: ? अवैधव्यार्थ: ?, रत्यर्थ: ?, सन्तानार्थो वा ? किमत्र बीजम् ? अवैधव्यार्थश्चेत्कालवशात्परेते भर्तरि वृद्धानामपि निवृत्तरजसां तदर्थं यत्रकुत्राऽपि नियोग: स्वीकर्तव्य:, न चैष सुन्दर:, निष्फलत्वात् । अथ चेन्मन्यते रत्यर्थ इति; सोऽपि न युज्यते;निवृत्तरजसामासामतदर्थमनस्कत्वप्रायोदर्शनात् । न चैवम्- अवैधव्यार्थो रत्यर्थो वा, न हि वृद्धविधवानां विवाह: संघटते लोके- इति नाद्यौ पक्षौ युक्तियुक्तौ । यदि तु- अन्तिम: सन्तानार्थपक्ष: स्वीक्रियते ?, सोऽपि न रमणीय:, निवृत्तरजस्कासु बहुसन्तानास्वपि तदर्थत्वस्य प्रयोजनाऽदर्शनेन तादृशीनां नियोगो न कर्तव्य: स्यात् ।

अथ चाऽपि- आत्मीयाभ्यान्तरिकाऽभिप्रायं प्रकटीकृत्य- अवैधव्यार्थो, रत्यर्थ:, सन्तानार्थश्चेति पक्षत्रयार्थो बालानामेव विधवानां नियोग: स्वीक्रियते- इति प्रत्युच्यते चेत् ? एवमपि तर्हि तादृशीनां वैधव्यतदभावयो, रतिजाऽऽनन्दस्य, सन्तानस्य चाऽनुभवविषयत्वाऽभावान् न विचारसह: । अथ युवतीनामेव विधवानां तथाक्रियते चेत् ? तदपि न, बहुपुत्राणामपि तासां तथा कर्तव्यत्वेन सन्तानार्थत्वाभावात् ।

अथ च रतिसन्तानोभयात्मकार्थे नियोगपक्षे नपुंसकप्रायाणामचिकित्स्यरोगग्रस्तानां यावज्जीवं कारागारबद्धानां, पतितानां, प्रव्रजिता-

नाञ्चाऽपुत्रपुरुषाणां पत्न्यः सधवा अपि यत्र **क्वचन** तदर्थं नियुज्येरन्, न चैतद्युज्यते । एवञ्च कस्य हेतोर्नियोगः **स्वीकर्तव्य इत्यत्र किं प्रतिवक्तव्यं भवद्भिरिति** प्रतिवचनाभावान्मौनमास्थाय **सनातनैकधर्मावलम्बिनां** मतस्य **श्रेयस्करत्वं, युक्तियुक्तत्वं, श्रेष्ठत्वञ्च निश्चेतव्यमेव ।**

अथ चात्र विषये हि- एवमप्यपरितोषपरम्परापर्य्याकुलितचेतसः स्वाभिप्रेतार्थसाधने प्रवृत्ता अपि स्वप्रदर्शितप्रमाणादेव निजाऽनभिप्रेतार्थ-सिद्धतयाऽर्थान्तरदोषकलङ्किताः सन्तोऽपि भवन्तः पुनः पृच्छ्यन्ते-

कस्तावन्नियोगपदार्थः ? कीदृशश्च ?, यदि- "नि' पूर्वकाद् **युजिर् योगे** इत्यस्माद्रौधादिकाद्धातोर्भावार्थक**घञ्**प्रत्ययेन **नियोजनम्**, इतिव्युत्पत्त्या निष्पन्नो यौगिको "नियोग" शब्दः स्वीक्रियते ?, तर्हि- पूर्ववन्निवृत्तरजस्कादयो विधवा नपुंसकप्रायाद्यपुत्रपुरुषाणां पत्न्यश्च सधवा अपि सर्वा एव नियुज्येरन् ।

"अपुत्रविधवायुवतीनामेव सन्तानार्थे यत्र क्वचन नियोजनं नियोगः" इत्येवं पङ्कजादिपदवद्यौगिकरूढोऽङ्गीक्रियते ? तदानीमपि- "यत्र क्वचने"त्युक्ते- "र्यत्र क्वचने" ति-कुत्र ? सति संभवे-देवरे, तदभावे-सपिण्डे तस्याऽप्यभावे-सगोत्रे, तस्याऽप्यभावे-नियोगावसरविशेषे समीपे यः कोऽपि प्राप्यते तत्रैवेति वक्तव्यतया तदानीं खलु समीपे यं कमपि निरपेक्षित-जात्यादिकमाचाण्डालमवश्यनियोजनीयत्वेन सर्वत्राऽपि प्रयोगार्हस्य "पाचक,-पाठका"दिपदस्येव "नियोग"पदस्यापि "पङ्कज"पदस्य "कमलार्थमात्रवद्" "एकजात्यर्थमात्रे" प्रयोगो न भवेद् इति- न पङ्कजादि- पदवद् "यौगिकरूढत्व"मङ्गीकर्तुं शक्यते-इति महत्यनवस्था गौरवञ्च महत्, अपि च उक्तयैव रीत्या चाण्डालादावपि नियोगे दोषाभावः स्वीकर्तव्यो भवेद् भवताम्-इति ।

अस्माकन्तु- सनातनैकधर्मावलम्बिनां "निपूर्वकाद्' "युज" समाधौ' इत्यस्माद्दैवादिकाद्धातोर्भावार्थक"घञ्"प्रत्ययेन "नितरामत्यन्तं योजनं समाधि-र्नियोगः" इत्येवंव्युत्पत्त्या निष्पन्नस्यैव यौगिकस्य "नियोग"शब्दस्य स्वीकर्तव्य-तया पुत्रवतीनां, तदभाववतीनाञ्च यादृशां तादृशामपि विधवानां सहाऽगमन-पक्षे- नियोगद्वारा-अर्थात्- पुरुषान्तरसम्पर्कादिषु सांसारिकक्षणिकविषयेषु चित्तवृत्तीनामत्यन्तनिरोधद्वारा पातिव्रत्यपालनस्य मुक्तिसाधनत्वान्न कश्चिद्दोषः; अत एव **पतञ्जलिर्भगवान्** सूत्रयाञ्चकार-"**योगश्चित्तवृत्तिनिरोधः**" इति ।

अत एवैतदेवाऽभिप्रेत्य खलु ऋक्संहिताया भाष्यकारः-**सायणाचार्य्यो**ऽप्येवमुल्लिखितवान्-

"देवरादिकः प्रेतपत्नीमुदीर्ष्वनारीत्यनया भर्तृसकाशादुत्थापयेत्, सूत्रितञ्च- तामुत्थापयेद्देवरः पतिस्थानीयोऽन्तेवासी जरद्दासो वोदीर्ष्व नार्यभिजीवलोकमिति" । इति ।

अत्र हि- सहान्वारूढोत्थापननियामकविधिशास्त्रे पठितस्य "देवरः" इत्यस्य सपिण्डसगोत्रयोरप्युपलक्षणत्वं स्वीकर्तव्यं भवति । एवं "पतिस्थानीयः" इत्यस्यापि मध्यमणिन्यायेन, देहलीदीपकन्यायेन, काकाक्षिगोलकन्यायेन वाऽपि "देवरः" इत्यत्र- पूर्वत्र, तथा-"अन्तेवासी," "जरद्दासः" इत्यत्र परत्र चोभयत्राऽपि विधेयविशेषणत्वेन समन्वयः कर्तव्यो भवति; प्रमीतपतिकाया अनाथाया जीवनसंरक्षणे देवरसपिण्डसगोत्रान्तेवासि-जरद्दासानामपि साहाय्य-प्रदानेऽधिकाराऽविशेषेण बन्धुत्वसाम्यसत्त्वात्तदौचित्यसत्तयैव पतिस्थानीय-त्वस्य निराबाधात् ।

अन्यथा- देवरस्यासत्त्वे प्रमीतपतिकायाः सपिण्डसगोत्रान्तेवासि-जरद्दासानां पतिस्थानीयत्वाभावेन जीवनसंरक्षणेऽप्यधिकारो न युज्येत ।

अथ च देवरादीनामभावे चितारूढपतिशरीरसकाशात् सहान्वारूढाया उत्थापनेऽन्तेवासिजरद्दासयोरप्यनधिकार आपद्येत ।

एवमुपरिष्टाद्यथा कथञ्चिद्दर्शयिष्यमाणे युगान्तरीयापद्धर्म्यत्वविषयके पुत्रोत्पादनरूपनियोगे सपिण्डसगोत्रयोरधिकारश्च नोपपद्येत ।

तदेवम्, नहि देवरसपिण्डसगोत्राणां प्रमीतपतिकाया जीवनसंरक्षणे पतिस्थानीयत्वमात्रेण सत्यामप्यापदि कलौ सविधिकनियोगधर्मबुद्ध्यापि पुत्रोत्पादनाद्यर्थं पुनः पाणिग्रहणेनोत्थापनम् । अन्यथा तत्त्वसत्तातुल्य-न्यायेनाऽन्तेवासिजरद्दासयोरपि तथात्वमापद्येत ।

एतेन "प्रमीतपतिकायां देवरस्यैव पतिस्थानीयत्वेन कलावपि पुत्रोत्पादनाद्यधिकारः"- इतिपरेषां विधवाविवाहैकसत्याग्रहवतामत्याचारः स्वयं परास्तो भवति ।

ततश्चैतेनैतदुक्तं भवति प्रमीतपतिपतितशरीरस्य सहानुगमनविधि-नोत्तरतश्चितां सहान्वारूढाया अपि पुनः प्रोज्ज्वलज्ज्वलनज्वालापरितापभयतः कातरायास्तु जीवनसंरक्षणादिहिताचरणेन पतिस्थानीयतामापन्नैर्देवरादिजरद्दा-सपर्य्यन्तैरात्मीयैर्बन्धुभिर्वैधव्यद्वाराऽपि प्राणधारणमात्रैकलभ्यब्रह्मचर्यादि-कपातिव्रत्यपरिपालनस्य निःश्रेयससाधनत्वं प्रदर्शयद्भिः सद्भिः सति संभवे संबोध्य जीवनसंरक्षणबुद्ध्यैव पाणिं गृहीत्वा चितारूढपतिशरीर-सकाशाद्यथापूर्वमन्यतमेनोत्थापनं कर्तव्यं, नतु पतिस्थानीयत्वेन पुत्रोत्पादन-

रूपनियोगबुद्ध्येति । तथा चैतावता- एवमवगम्यते- वैधव्यप्रपीडिताया अत एव निजदक्षिणाङ्गभूतस्य पत्यु: प्राणप्रमाणेन शरीरपातात्स्ववामशरीरावशेषेणाऽर्धशरीराया: स्वस्या अपि मृतप्रायत्वं मन्यमानाया अत एव च तमन्तरेण निजार्धशरीरस्याऽवस्थानमात्रस्याऽप्यसंभवेन यथाकथञ्चिदवस्थानसम्भवेऽपि जीवननिर्वाहस्य तु पुनरसंभवादेव ह्यगत्या खलु पुत्रपौत्रादिपरिजनानां परिपालनस्याऽप्यनुपपत्तिमालोच्यैव यथाकथञ्चित्प्राणधारणमप्यनिच्छन्त्या अत एव हि तत्सहानुगमनातिरिक्तं स्वश्व:श्रेयसविधानमनभिपश्यन्त्या एतादृश्या: पतिविरहकातरायास्तत्सहाऽनुजिगमिषया तदुत्तरतश्चितौ सहान्वारोहणादकातराया अपि सहान्वारूढायास्तु प्रोज्ज्वलज्ज्वलनज्वालापरितापभयत: पुन: कातराया एव देवराद्यन्तेवासिजरद्दासपर्य्यन्तानां जीवनसंरक्षणादिहिताचरणे पतिस्थानीयत्वप्रदर्शनद्वारा प्रयातप्राणस्य पत्युश्चितारूढशरीरसकाशात्तदन्यतमेन यथापूर्वमुत्थापननियामकविधिशास्त्रेण वैधव्यैकलभ्यसहानुगमनातिरिक्तब्रह्मचर्य्यादिपालनस्य नि:श्रेयससाधनतया ततोऽप्युपकृताया अत एव प्रमीतपतिवामाङ्गभूतनिजदक्षिणाङ्गस्य चैतन्यावच्छेदकत्वसत्त्वेन चैतन्यावच्छेदकनिजवामाङ्गस्य तु स्वीयाऽसाधारण्यसत्त्वेनैव चोभयतो मिलित्वा सम्पूर्णशरीराया मृतप्रायत्वासद्भावेन कथञ्चिदवस्थानसंभवात्तमन्तरेणाऽपि पतिस्थानीयतापन्नदेवराद्यन्तेवासिजरद्दासपर्य्यन्तबन्धुकर्तव्यसंरक्षणसाहाय्यविशेषात्मकस्वशरीरारम्भकादृष्टविशेषवशत एव जीवननिर्वाहसद्भावेनाऽत एव गत्यन्तरसत्तया पुत्रपौत्रादिपरिजनपरिपालनस्य यथाकथञ्चिदुपपत्तिं विचार्य्यैवाऽपि यथाकथञ्चित्प्राणधारणस्याऽप्येष्टव्यत्वेनाप्यथ च प्रत्युत प्रमीतस्य पत्यु: पारत्रिकहिताचरणादितत्सहानुगमनाऽतिरिक्तनि:श्रेयससाधनीभूतब्रह्मचर्य्यादिवैधव्यधर्मपरिपालनात्मकस्वश्व:श्रेयसविधानस्यापि सुतरां समीक्ष्यमाणताया: स्पष्टमेवावबोधनात्,

तथा-प्रमीतचितारूढपतिशरीरसकाशादुत्थापननियामकविधिशास्त्रीयाङ्गभूतमन्त्रवाक्यार्थनिष्कर्षप्रामाण्यप्राबल्यपर्य्यालोचनया तन्मन्त्रवाक्यपूर्वापरीयमन्त्रान्तरवाक्यार्थनिष्कर्षसमालोचनयाऽपि च सत्यपि पतिविरहे तत: कातरयाप्यभाव्यतयाऽत एव तत्सहानुजिगमिषाया अप्यसंभावनीयतया च तदुत्तरतश्चितौ सहान्वारोहणात्कातरयापि भाव्यताया: प्रतीतेश्च तत्सहानुगमनापेक्षया तदीयपारत्रिकहिताचरणब्रह्मचर्य्यादिपातिव्रत्यनियम-

परिपालनात्मकस्यैव चित्तवृत्तिनिरोधाऽ परपर्यायस्य समाधिसमाख्यस्य नियोगस्य नि:श्रेयससाधने सर्वथा गरीयस्त्वम्- इति सर्वं निरवद्यम् ।

यदपि- "उदीर्ष्व" इत्येतन्मन्त्रवाक्यत: पूर्वत्र पठितस्य "इमा नारीरविधवा:" इति मन्त्रस्याऽपि स्त्रीणामवैधव्यप्रतिपादकत्वमङ्गीकृत्य विधवाविवाहस्य सर्वथैवाऽङ्गीकर्तव्यत्वमुक्तम्; तदपि साहसिक्यमात्रम्; तत्र हि तावद्- नारीणामवैधव्यं कीदृशम् ?" अविगतधवात्वम् ?, आहोश्वि- दविप्रकृतधवात्वम् ? अथवाऽविकृतधवात्वम् ? किंवाऽविप्रकृष्टधवात्वम् ?, उताहो ?, अविभिन्नधवात्वम् ? किमुताऽविनिर्गतधवात्वम् ?, किंवा- ऽविनियुक्तधवात्वम् ?, किमथवाऽविशिष्टधवात्वम् ?" अविगत-धवादीनां सर्वासामप्यवैधव्यसंभवात् ।

तत्र हि- अविशिष्टधवात्वञ्चेद् ? विशिष्टधवानां जीवत्स्वपि धवेषु वैधव्यं स्वीकर्तव्यं भवेद् । एवम्- "सप्तमपक्षे- विनियुक्तधवानाम्, षष्ठपक्षे च- विनिर्गतधवानाम्, पञ्चमपक्षेऽपि विभिन्नधवानाम्, चतुर्थपक्षे चापि विप्रकृष्टधवानाम्, तृतीयपक्षेपि च-विकृतधवानाम्, द्वितीयपक्षे चाऽपि विप्रकृतधवानाम्" इत्येवं सर्वासामेव सधवानां जीवत्स्वपि धवेषु वैधव्यं स्वीकर्तव्यं भवेत् ।

तथा च- द्वितीयादिषु पक्षेषु विप्रकृतधवादीनामविप्रकृतधवादीनाञ्च जीवत्स्वपि धवेषु सर्वासां सधवानामपि विधवात्वम्, अथ च- तस्यैव पुनर्विवाहप्रयोजकत्वञ्चाङ्गीकर्तव्यं भवेदेव ।

किञ्च- अन्तिमपक्षे ह्यविशिष्टधवा नाम गुणलवहीनपतिका अविधवा नाम सधवा:, विशिष्टधवा नाम गुणगणगरिष्ठपतिका विधवा इत्येवमुभयत्रैव विरुद्धार्थकविपरीतव्यवहारोऽपि स्वीकर्तव्यो भवेत् ।

यदि तु नाम प्रथम एव पक्ष: स्वीक्रियते ?, तर्ह्यपि द्वितीयादिषु पक्षेष्वन्यतम : पक्ष: किं न स्वीक्रियते ?, का तत्र विनिगमना ? तदेवम्- तत्र किं प्रतिवक्तव्यं भवद्भि: पापापसदै: ?

अथ प्रकरणाख्यतृतीयप्रमाणबलाद् द्वितीयादिपक्षवर्जं प्रथम एव पक्षो- ऽङ्गीक्रियते ?, तर्हि किन्नश्छिन्नम्; उपायान्तररहितैरत एवाऽस्मदीय- मताऽभ्युपजिगमिषाशालिभिर्भवद्भि: पूर्वं प्रायश्चित्तं कृत्वैवाऽस्मदीयवर्गे प्रवेष्टव्यं भवति ।

तथा चैवमत्राऽर्थे-अस्माकं समाख्यारूपषष्ठप्रमाणस्यापि जागरूकतया

विगतो-विशेषेण लोकान्तरं यातो धवः पतिर्यस्यास्तादृशी न भवतीत्यर्थादमृतपतिकैवाऽ विधवेत्येवमर्थस्य स्वीकर्तव्यत्वं भवत्येव ।

तथा च प्रकरणाख्यतृतीयप्रमाणसाहाय्येन पातिव्रत्यप्रकरणस्थाद् "उदीर्ष्व" इत्येतन्मन्त्रवाक्यतः पूर्वत्र- पठितस्य "इमा नारीरविधवाः" इति मन्त्रस्थस्य "नारी"तिपदस्य द्वितीयान्तत्वश्रुत्या तत्साहचर्य्येण- "इमा; अविधवाः", इति पदद्वयस्यापि द्वितीयान्तत्वस्य स्वीकर्तव्यत्वेप्युत्तरवाक्यानुरोधेन प्रथमान्तत्वं छान्दसं स्वीकर्तव्यं भवति ।

तथा च- इमा एताः पुरःस्थचितारूढमृतपतिकेतरा नारीर्नार्य्योऽ विधवा अविगतपतिका अर्थाज्जीवद्भर्तृका इत्येवमर्थस्य स्वीकाराऽ त्यावश्यकत्वेन मृतपतिकाया अवैधव्यप्रतिपादकत्वं नैतस्याः श्रुतेः कथंकथमपि संघटते । अत एव हि- "इमा नारीरविधवाः" इत्येतन्मन्त्रवाक्यत उत्तरत्र पठिते "सुपत्नीराञ्जनेन सर्पिषा संविशन्तु" इत्येतन्मन्त्रवाक्ये पठितम्-"सुपत्नीः" इति प्रथमार्थे द्वितीयान्तं पदं सुसङ्गच्छते, तस्य च-"शोभनपतिकाः" इत्यर्थः; भर्त्तुर्जीवनेनैव हि स्त्रीणां सुपत्नीत्वमर्थाच्छोभनपतिकात्वं नान्यथा ।

अत एव च- श्मशानात्प्रतिनिवृत्य सर्पिषा नेत्रयोरञ्जनपूर्वकं गृहप्रवेशविधिः सुतरां सङ्गच्छते । तथा चाऽ यं वाक्यार्थः-

"अविधवा जीवद्भर्तृकाः सुपत्नीः शोभनपतिका इमा एताः पुरःस्थचितारूढमृतपतिकेतरा नारीर्नार्य्य आञ्जनेनाऽ ञ्जनसाधनेन सर्पिषा घृतेनाऽ क्तनेत्राः सत्यः संविशन्तु गृहान्प्रविशन्तु । तथा- अनश्रवो ऽ श्रुवर्जिता अर्थादरुदत्योऽ नमीवा मानसिकदुःखात्मकरोगरहिताः सुरत्नाः शोभनधन-सहिता जनयोऽ पत्यजनन्यो भार्या अग्रे सर्वेषां प्रथमत एव योनिं गृहमारोहन्त्वागच्छन्तु ।" इति ।

अस्याऽ यमाशयः- प्रेतं श्मशानं नीतवन्तो बान्धवाः प्रेतदाहादिकृत्यं समाप्य स्त्रीबालपुरःसरं घृताञ्जनपूर्वकं गृहं प्रविशन्ति; तद्यथा **गरुडपुराणे-**

**जनाः सर्वे समास्तस्य गृहमागत्य सर्वशः ।**
**द्वारस्य दक्षिणे भागे गोमयं गौरसर्षपान् ॥**
**निधाय वरुणं देवमन्तर्धाय स्ववेश्मनि ।**
**भक्षयेन्निम्बपत्राणि घृतं प्राश्य गृहं व्रजेत् ॥**
**केचिद् दुग्धेन सिञ्चन्ति चितास्थानं खगेश्वर ।**
**अश्रुपातं न कुर्वीत दत्त्वा चाथ जलाञ्जलिम् ॥**
(और्ध्वदैहिक-कर्मादि-संस्कारवर्णने)

तदेव प्रार्थयते- वान्धवानामग्रणी: कश्चिद् मृत्युनामकं देवम्- एवम्- इति।

एवं हि सत्येतस्य मन्त्रवाक्यस्य पूर्वापरवाक्यैरप्येकवाक्यत्वं संभवत्येव, प्रकरणाख्यतृतीयप्रमाणस्य प्रवृत्तिरपि समुपपन्ना भवत्येव।

तथा चैतन्मन्त्रवाक्यद्वयपूर्वापरस्थमन्त्रवाक्यानि चेमानि-तानि- यथा-

**ऋक्संहितायाम्-** सप्तमेऽष्टके षष्ठेऽध्याये- द्वितीये सूक्ते- षड्विंशसप्तविंशाऽष्टाविंशकण्डिकासु-

परंमृत्योऽअनुपरेहि पन्थां यस्तेस्वऽइतरो देवयानात्।
चक्षुष्मते शृण्वते ते ब्रवीमि मा न: प्रजां रीरिषो मोत वीरान्॥
मृत्यो: पदं योपयन्तो यदैतद्राघीयऽआयु:प्रतरं दधाना:।
आप्यायमाना: प्रजया धनेन शुद्धा: पूता भवत यज्ञियास:॥
इमे जीवा विमृतैराववृत्रन्नभूद्भद्रा देवहूतिर्नोऽअद्य।
प्राञ्चोऽअगाम नृतये हसाय द्राघीयऽआयु: प्रतरं दधाना:॥
इमं जीवेभ्य: परिधिं दधामि मैषां नुगादपरोऽअर्थमेतम्।
शतं जीवन्तु शरद: पुरूचीरंतर्मृत्युं दधतां पर्वतेन।
यथाहान्यनुपूर्वं भवन्ति यथऽऋतवऽऋतुभिर्यन्ति साधु।
यथा न पूर्वमपरो जहात्येषा धातरायूंषि कल्पयैषाम्॥ २६॥
आरोहतायुर्जरसं वृणानाऽअनुपूर्वं यतमाना यतिष्ठ।
इहत्वष्टा सुजनिमासजोषादीर्घमायु: करति जीवसे व:॥
इमा नारीरविधवा: सुपत्नीराञ्जनेन सर्पिषा संविशन्तु।
अनश्रवोऽनमीवा: सुरत्नाऽऽआरोहन्तु जनयो योनिमग्रे॥
उदीर्ष्व नार्यभिजीवलोकं गतासुमेतमुपशेषऽएहि।
हस्तग्राभस्य दिधीषोस्तवेदं पत्युर्जनित्वमभिसंबभूथ॥
धनुर्हस्तादाददधानो मृतस्यास्मे क्षत्राय वर्चसे बलाय।
अत्रैव त्वमिह वयं सुवीरा विश्वा: स्पृधोऽअभिमातीर्जयेम॥
उपसर्प मातरं भूमिमेतामुरुव्यचसं पृथिवीं सुशेवाम्।
ऊर्णम्रदा युवतिर्दक्षिणावतऽएषा त्वा पातु निर्ऋतेरुपस्थात्॥२७॥
उच्छ्वंचस्व पृथिवि मानिबाधथा: सूपायनास्मै भवसूपवञ्चना।
माता पुत्रं यथा सिचाभ्येनं भूमऽऊर्णुहि॥
उच्छ्वंचमाना पृथिवी सुतिष्ठतु सहस्रं मितऽउपहिश्रयन्ताम्।
ते गृहासो घृतश्चुतो भवन्तु विश्वाहास्मै शरणा: सन्त्वत्र॥
उत्ते स्तभ्नामि पृथिवीं त्वत्परीमं लोमं निदधन्मोऽअहं रिषम्।

**एतां स्थूणां पितरो धारयन्तु तेत्रा यम:सादना ते मिनोतु ॥**
**प्रतीचीने मा महनीष्वा: पर्णमिवादधु: ।**
**प्रतीचीं जग्रभावाचमश्वं रशनया यथा ॥ २८॥** इति

एवम् यदपि- **ऋक्संहितायाम्** अष्टमाष्टके दशममण्डले, सप्तमानुवाके, तृतीयाध्याये, प्रथमसूक्ते सप्तविंशाऽष्टाविंशकण्डिकयो:, **पारस्करगृह्यसूत्रे**, प्रथमकाण्डे, चतुर्थ्यां कण्डिकायाम् , षोडशसूत्रस्य च- विधवानां विवाहे साकधत्वेनोपन्यसनं कृतम्; तत्रैवम्प्रतिब्रूम:-

तत्रहि तावत्- "सोम: प्रथमो विविदे" इत्यारभ्य-"मह्यमथो इमाम्" इत्यन्तं वाक्यं मन्त्रद्वयात्मकमात्रं न क्वचिद्विनियुक्तम्, अपितु- स्वपूर्वापरस्थमन्त्रान्तरद्वयेन सहैव वधूवरयो: परस्परं कन्यादानकर्तु: समीपे समीक्षणक्रियाकारणे वरकर्तृकपाठे विनियुक्तं वक्ष्यमाणमन्त्रचतुष्टयात्मकं वाक्यमिदम्; तद्यथा- **पारस्करगृह्यसूत्रे** प्रथमकाण्डे, चतुर्थ्यां कण्डिकायाम्, षोडशसूत्रे-

**अघोरचक्षुरपतिघ्न्येधि शिवा पशुभ्य: सुमना:सुवर्चा: ।**
**वीरसूर्देवकामास्योना शन्नोभवद्विपदे शं चतुष्पदे ॥१॥**
**सोम: प्रथमो विविदे गन्धर्वो विविदऽउत्तर: ।**
**तृतीयोऽअग्निष्टे पतिस्तुरीयस्ते मनुष्यजा: ॥२॥**
**सोमोऽददद्गन्धर्वाय गन्धर्वोऽददद्ग्नये ।**
**रयिं च पुत्रांश्चादादग्निर्मह्यमथो इमाम् ॥३॥**
**सा न: पूषा शिवतमामैरयसानऽऊरू ऊशती विहर ।**
**यस्यामुशन्त: प्रहराम शेपं यस्यामुकामा बहवो निविष्ट्यै ॥४॥** इति।

तस्यैतस्य मन्त्रचतुष्टयात्मकवाक्यस्यापातत एवार्थविचारत:, तथा- "पूर्वं स्त्रिय: सुरैर्भुक्ता: सोमगन्धर्ववह्निभि:" इतिस्मृत्यन्तरतश्च जन्मदिनप्रभृत्येव सार्धवर्षसप्तकं यावत्क्रमश: सोमगन्धर्ववह्निभिरुपभुक्तत्वेनाऽन्तिममानुषपतेस्तुरीयत्वप्रत्यक्षश्रुत्या, तथैवम्-

स्त्रीणां दानपक्षे दानचोदनश्रुतिस्मृतिप्रभृतिभ्यो मानुषपते: पञ्चमत्वाऽवश्यं भाव्यतया चासां जातपूर्वव्यभिचाराणां परपूर्वताया: सुष्पष्टाऽवगम्यत्वेन परेतेऽपि पत्यौ तुरीये पुन: पञ्चमादौ तासां नियोगो यद्यपि निर्बाध एवाभासते; तथापि-

परमार्थतस्तदीयनिष्कर्षार्थपर्य्यालोचने तु नियोगपक्षस्वीकारे मानुषपते: पञ्चमादेर्भाव्यत्वेन स्वपतेर्मन्त्रोक्ततुरीयत्वसंख्यानियमबाधाऽऽपात: प्रसज्येत,

"तुरीयस्ते मनुष्यजा:" इत्यत्र-"तुरीय:" इतिसंख्याविशेषबोधकपदनिवेशेन मनुष्यज: पतिस्तुरीय एव भवति, नतु पञ्चमोऽपीत्येवं नियमबोधनात् । उपभोगप्रतीतिरप्यापातत एव नतु परमार्थतोपि; प्रथममन्त्रे- "विविदे" इत्यस्य "रक्षकत्वेन लब्धवान्" इति, द्वितीयमन्त्रे- "पति:" इत्यस्य "रक्षक:" इति, तथा-

"पूर्वं स्त्रिय: सुरैर्भुक्ता: सोमगन्धर्ववह्निभि:"

इत्यत्राऽपि पालनार्थकभुजधातोर्व्युत्पन्नस्य "भुक्ता" इत्यस्य "रक्षिता" इति चैवमप्यर्थसंभवात् ।

अत एव- चतुर्थमन्त्रार्थप्रयोजनं मानुष एव पत्यौ संघटते, नतु सोमगन्धर्वाग्निष्वपि । अर्थात्- सोमगन्धर्वाग्नय: पतय: सन्तोऽपि न मानुषपतिवदुपभोक्तार:, किन्तु केवलं रक्षका एव । मानुषपतिस्तूपभोक्ताऽपि नतु सोमादिवत्केवलरक्षक इति चतुर्थमन्त्रार्थलिङ्गादवगम्यते ।

तदेवम्- विधवानां विवाहस्य न्याय्यत्वं, धर्म्यत्वञ्चाऽयुक्तमेवेति सर्वथैव नाऽभ्युपेयमेतद्भवतीति ।

तथा- यच्च- तत्रैव **पारस्करगृह्यसूत्रे** प्रथमकाण्डे पञ्चम्यां कण्डिकायाम्, एकादशसूत्रे-

**अशून्योपस्था जीवतामस्तु माता पौत्रमानन्दमभिविबुध्यतामियँ स्वाहा**

**इत्यौद्वाहिकमन्त्रे- "अशून्योपस्था", जीवतामस्तु माता,** पौत्रमानन्दमभिविबुध्यताम्"इत्येवं वाक्यं मन्त्रलिङ्गत्वेनोपन्यस्य नियोगस्याऽवश्यकर्तव्यत्वं प्रतीत्य विधवाविवाहस्याऽवश्यमभ्युपगन्तव्यत्वमुक्तम्; तदप्यात्मीयं मूर्खत्वं प्रकटीकृतम्, तद्धि तावत्-

"अशून्योपस्था" इत्यारभ्य- "इयँ स्वाहा" इत्यन्तं वाक्यमर्धमन्त्रात्मकं, न सम्पूर्णम्; संपूर्णमन्त्रात्मकन्तु वाक्यमेतत्; तद्यथा- "इमामग्निस्त्रायतां गार्हपत्य: प्रजामस्यै नयतु दीर्घमायु: । अशून्योपस्था जीवतामस्तु माता पौत्रमानन्दमभिविबुध्यतामियँ स्वाहा" इति ।

तदिदं मन्त्रवाक्यमौद्वाहिकाऽग्निदैवत्याज्यहोमे विनियुक्तम्, तस्य च निष्कर्षार्थपर्यालोचनेऽप्यग्निं संबोध्य कुमार्या आशी:प्रार्थनापराऽर्थत्वं निश्चेतुं शक्यम्, नतु नियोगपरार्थत्वमपि; प्रकरणविरोधात्, जीवत्पतिकानामजातपुत्राणां विनष्टपुत्राणाञ्च जीवत्पुत्रमात्रभाव्यतया, पुत्रजन्याऽऽनन्दविशेषाऽनभिज्ञतया च तदुपपत्त्यै चापि सधवानामपि नियोगकर्तव्यत्वाऽऽपातात्, तथा-

जीवत्पुत्राणां पुत्रजन्यानन्दविशेषाऽभिज्ञानाञ्च विधवानां शून्योपस्थतयैवाऽशून्योपस्थतार्थमपि नियोगकर्तव्यत्वप्रसङ्गाच्च । तस्मान्नेदं मन्त्रवाक्यं विधवानियोगप्रत्यायकमिति नैव विधवानां विवाहस्य कथामात्रमपि चिन्तयितुं योग्यम् ।

तथा पुनर्यच्चापि तस्यैव षष्ठ्याः कण्डिकायाः तृतीयसूत्रस्य, **ऋक्संहिताया** अष्टमाष्टकस्य, दशममण्डलस्य, सप्तमानुवाकस्य, तृतीयाध्यायस्य, प्रथमसूक्तस्य सप्तविंशकण्डिकायाः- **गृभ्णामिते सौभगत्वाय-हस्तम्** इत्यादि मन्त्रवाक्यार्थनिष्कर्षार्थपर्य्यालोचनेन बह्निरूपभगादिकर्तृक-प्रदानतस्तैरुपभुक्तत्वरूपार्थिकाऽर्थप्रतीत्या स्त्रीणां बहुभर्तृकात्वरूपस्पष्ट-प्रमाणतो विधवानां विवाहस्याऽङ्गीकर्तव्यत्वमुक्तम्, तदपि साहसमात्रम्; बह्न्यादिदेवानामनुपभुक्त्यैव केवलसंरक्षणरूपार्थस्य पूर्वमेव व्याख्यातत्वात्- इति नैव विधवानां विवाहस्याऽङ्गीकर्तव्यत्वम् ।

यदपि पुनः- "तस्मादेकस्य बह्व्यो जाया भवन्ति नैकस्यै बहवः सहपतयः" इति श्रुत्या 'सह' इतिपदेनैकस्या युगपदेव बहुपाणिग्रहीतृकत्वनिषेधज्ञापनद्वारा प्राथमिकस्य पाणिग्रहीतुः प्रणाशाद्युत्तरं पाणिग्रहीत्रन्तराश्रयणज्ञापनात्स्पष्टमासां बहुभर्तृकात्वमिति विधवानां विवाहस्य सर्वथैवाऽभ्युपगन्तव्यत्वं भवतीत्युक्तम्, तदपि न प्रमाणसहम्; "नैकस्यै बहवः सहपतयः" इति हि श्रुतिर्युगपदेव बहुपाणिग्रहीतृकत्वनिषेधज्ञापनद्वारा वाग्दानोत्तरं सप्तपदीतः पूर्वमेव नष्टादिपतिकानां नियोगबोधिकाऽपि कलिनिषेधपरश्रुत्यादिभिर्बाध्यत एव । एतच्चाग्रे यथावसरं यथावत्प्रपञ्चयिष्यते ।

यदपि च पुनः- धर्मशास्त्रेष्वपि प्रथमम्-

**नष्टे मृते प्रव्रजिते क्लीवे च पतिते पतौ ।**
**पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते ॥**

इति **नारदपराशरयोः** स्मृतिवचनं नष्टादिपतिकानां पुरुषान्तरेण सह पुनर्विवाहस्य पित्रादिकर्तृकत्वश्रौतसंबन्धयोर्ज्ञापकतामवष्टभ्य कैमुतिकन्यायेनाऽपि विधवाविवाहसाधकतया प्रमाणीकृत्य समुपन्यस्तम्;

तत्रैवं प्रत्याचक्ष्महे-

किमेतद्वचनमपूर्वविधायकम् ? उत नियामकम् ?, आहोश्वित्परिसंख्यायकम् ? नाद्यम्, आपत्स्वनापत्सु च पत्यन्तरकरणस्य रागप्राप्तत्वात्, तथा च **श्रीमद्भागवते**-

"लोके व्यवायाऽमिषमद्यसेवा नित्यास्तु जन्तोर्नहि तत्र चोदना" इति ।

अत एव मनु:-न कश्चिद्योषित: शक्त: प्रसह्य परिरक्षितुम् ।
एतैरुपाययोगैस्तु शक्यास्ता: परिरक्षितुम् ॥९।१०॥
पानं दुर्जनसंसर्ग: पत्या च विरहोऽटनम् ।
स्वप्नोऽन्यगेहवासश्च नारीसन्दूषणानि षट् । ९॥१३॥
नैता रूपं परीक्षन्ते नासां वयसि संस्थिति: ।
सुरूपं वा कुरूपं वा पुमानित्येव भुञ्जते ॥९।१४॥
पौंश्चल्याच्चलचित्ताच्च नै:स्नेह्याच्च स्वभावत: ।
रक्षिता यत्नतोऽपीह भर्तृष्वेता विकुर्वते ॥९।१५॥
एवं स्वभावं ज्ञात्वासां प्रजापतिनिसर्गजम् ।
परमं यत्नमातिष्ठेत्पुरुषो रक्षणम्प्रति ।९।१६॥
शय्याऽऽशनमलङ्कारं कामं क्रोधमनार्जवम् ।
द्रोहभावं कुचर्य्याञ्च स्त्रीभ्यो मनुरकल्पयत् ॥९॥१७ ॥
नास्ति स्त्रीणां क्रिया मन्त्रैरितिधर्मे व्यवस्थिति: ।
निरिन्द्रिया ह्यमन्त्राश्च स्त्रियोऽनृतमितिस्थिति: ।९।१८॥
इति ॥ तथा-अन्यत्र च-
सुवेषं पुरुषं दृष्ट्वा भ्रातरं यदि वा सुतम् ।
योनि: क्लिद्यति नारीणां सत्यं सत्यं वदाम्यहम् ॥
सुरूपं पुरुषं दृष्ट्वा सुगन्धं मलवर्जितम् ।
क्लिद्यते यौवनं स्त्रीणामामपक्वमिवाम्भसम् ॥
घृतकुम्भसमा नारी तप्ताङ्गारसम: पुमान् ।
संश्लेषाद्द्रवते कुम्भस्तद्वत्स्त्री पुंसि भाषिता ॥
स्थानं नास्ति क्षणो नास्ति नास्ति प्रार्थयिता नर: ।
तेन नारद नारीणां सतीत्वमुपजायते ॥ इति ।

अत एव स्त्रीणां तत्र तत्र स्वातन्त्र्याभाव: प्रतिपादित: सुसङ्गच्छते । तत्र तावन्मनु:-

बालया वा युवत्या वा वृद्धया वापि योषिता ।
न स्वातन्त्र्येण कर्तव्यं किञ्चित्कार्यं गृहेष्वपि ॥ ५॥१४७॥
बाल्ये पितुर्वशे तिष्ठेत्पाणिग्राहस्य यौवने ।
पुत्राणां भर्तरि प्रेते न भजेत्स्त्री स्वतन्त्रताम् ॥५।१४८॥
अस्वतन्त्रा: स्त्रिय: कार्या: पुरुषै: स्वैर्दिवानिशम् ।
विषयेषु च सज्जन्त्य: संस्थाप्या आत्मनो वशे ॥९॥२॥

पिता रक्षति कौमारे भर्ता रक्षति यौवने ।
रक्षन्ति स्थाविरे पुत्रा न स्त्री स्वातन्त्र्यमर्हति ॥९॥५॥
इमं हि सर्ववर्णानां पश्यन्तो धर्ममुत्तमम् ।
यतन्ते रक्षितुं भार्यां भर्तारो दुर्बला अपि ॥९॥६॥
स्वां प्रसूतिं चरित्रं च कुलमात्मानमेव च ।
स्वधर्मञ्च प्रयत्नेन जायां रक्षन्हि तिष्ठति ॥९॥७॥
अर्थस्य संग्रहे चैनां व्यये चापि नियोजयेत् ।
शौचे धर्मेऽन्नपक्त्याञ्च पारिणाहस्य वेक्षणे ॥९॥११॥
अरक्षिता गृहे रुद्धाः पुरुषैराप्तकारिभिः ।
आत्मानमात्मना यास्तु रक्षेयुस्ताः सुरक्षिताः । ॥९॥१२॥
इति । एवम् **याज्ञवल्क्यो**ऽपि-
रक्षेत्कन्यां पिता विन्नां पतिः पुत्राश्च वार्धके ।
अभावे ज्ञातयस्तेषां न स्त्री स्वातन्त्र्यमर्हति ॥१।८५॥ इति । तथा **मिताक्षरायां शङ्खः**-

"नाऽनुक्त्वा गृहान्निर्गच्छेन्नानुत्तरीया, न त्वरितं प्रव्रजेन्न परपुरुषमभिभाषेताऽन्यत्र वणिक्प्रव्रजितवृद्धवैद्येभ्यो, न नाभिं दर्शयेदागुल्फाद्वासः परिदध्यान्न स्तनौ विवृतौ कुर्य्यान्न हसेदप्रावृता, भर्तारं तद्बन्धून्वा न द्विष्यान्न गणिकाधूर्ताभिसारिणीप्रव्रजिताप्रेक्षणिकामायामूलकुहककारिकादुःखशीलादिभिः सहैकत्र तिष्ठेत्संसर्गेण हि कुलस्त्रीणां चारित्रं दुष्यति ।" इति ।

तथा- **अपरार्के व्यासः**-
द्वारोपवेशनं नित्यं गवाक्षाऽवेक्षणं तथा ।
असत्प्रलापो हास्यं च दूषणं कुलयोषिताम् ॥ इति ।
पुनस्तत्रैव स्मृत्यन्तरवचनम्-
पक्षद्वयावसाने तु राजा भर्ता प्रभुःस्त्रियाः ।
स तस्या भरणं कुर्यान्निगृह्णीयात्पथश्च्युताम् ॥ इति ।

न च द्वितीयम्; पत्यन्तराऽकरणे प्रत्यवायाऽऽपत्तेः, कृतेऽपि पत्यन्तरे व्यभिचारजन्यदोषबोधकतत्तच्छास्त्रविरोधाऽऽपत्तेः, लोकनिन्दाऽऽपत्तेः, राजदण्डापत्तेश्च । यथाऽऽह **पराशरः**-
जारेण जनयेद्गर्भं मृते पत्यौ गते सती ।
तां त्यजेत परे राष्ट्रे पतितां पापकारिणीम् ॥
कामान्मोहाद्यदागच्छेत्त्यक्त्वा बन्धून्सुतांस्तथा ।
सा तु नष्टा परे लोके मानुषेषु विशेषतः ॥ इति ।

अत एव मनुरपि-

अपत्यलोभाद्या तु स्त्री भर्तारमतिवर्तते ।
सेह निन्दामवाप्नोति पतिलोकाच्च हीयते ॥५।१६१॥
नान्योत्पन्ना प्रजास्तीह न चाऽप्यन्यपरिग्रहे ।
न द्वितीयश्च साध्वीनां क्वचिद्भर्तोपदिश्यते ॥५।१६२॥
पतिं हित्वापकृष्टं स्वमुत्कृष्टं या निषेवते ।
निन्द्यैव सा भवेल्लोके परपूर्वेति चोच्यते ॥५।१६३॥
व्यभिचारात्तु भर्त्तुः स्त्री लोके प्राप्नोति निन्द्यताम् ।
शृगालयोनिं प्राप्नोति पापरोगैश्च पीड्यते ॥५।१६४।

अत एव राजदण्डञ्च पुनः स्मरतिस्म मनुर्यथा-

परदाराऽभिमर्शेषु प्रवृत्तान्नॄन्महीपतिः ।
उद्वेजनकरैर्दण्डैश्छिन्नयित्वा प्रवासयेत् ।८॥३५२॥
तत्समुत्थो हि लोकस्य जायते वर्णसंकरः ।
येन मूलहरोऽधर्मः सर्वनाशाय कल्पते ।८।३५३॥
परस्य पत्न्या पुरुषः संभाषां योजयन्रहः ।
पूर्वमाक्षारितो दोषैः प्राप्नुयात्पूर्वसाहसम् ।८।३५४॥
परस्त्रियं योभिभवेत्तीर्थेऽरण्ये वनेऽपि वा ।
नदीनां वापि संभेदे स संग्रहणमाप्नुयात् ।८।३५६॥
उपचारः क्रिया केलिः स्पर्शो भूषणवाससाम् ।
सहखट्वासनं चैव सर्वं संग्रहणं स्मृतम् ।८।३५७॥
स्त्रियं स्पृशेददेशे यःस्पृष्टो वा मर्षयेत्तया ।
परस्परस्याऽनुमते सर्वं संग्रहणं स्मृतम् ॥८।३५८॥
अब्राह्मणः संग्रहणे प्राणान्तं दण्डमर्हति ।
चतुर्णामपि वर्णानां दारा रक्ष्यतमाः सदा ॥८।३५९॥
न संभाषां परस्त्रीभिः प्रतिषिद्धः समाचरेत् ।
निषिद्धो भाषमाणस्तु सुवर्णं दण्डमर्हति ॥८।३६१।
भर्तारं लङ्घयेद्या तु स्त्री ज्ञातिगुणदर्पिता ।
तां श्वभिः खादयेद्राजा संस्थाने बहुसंस्थिते ।८।३७१॥
पुमांसं दाहयेत्पापं शयने तप्त आयसे ।
अभ्यादध्युश्च काष्ठानि तत्र दह्येत पापकृत् ॥८।३७२॥

इति । तथा याज्ञवल्क्योपि-

**नीवीस्तनप्रावरणसक्थिकेशा ऽवमर्शनम् ।**
**अदेशकालसंभाषं सहैकासनमेव च ॥२।२८४॥**
**पुमान्संग्रहणे ग्राह्य: केशाकेशि परस्त्रिया ।**
**सद्यो वा कामजैश्चिह्नैः प्रतिपत्तौ द्वयोस्तथा ॥२॥२८३॥**
**स्त्रीनिषेधे शतं दद्याद्द्विशतं तु दमं पुमान् ।**
**प्रतिषेधे तयोर्दण्डो यथा संग्रहणे तथा ॥२।२८५।**
**स जातावुत्तमो दण्ड आनुलोम्ये वधःस्मृतः**
**प्रातिलोम्ये वधः पुंसो नार्याः कर्णादिकर्तनम् । २।२८६॥** इति ।

अत एव हि नापि तृतीयम्; दोषातिशयप्रदर्शकनानास्मृतिवचनविरोधात् । तथा च विधिनियमपरिसंख्यानामेकतमस्याऽपि निर्विषयत्वादेतदप्रमाणमेव भवतां मते, तत्कथं विधवाविवाहसाधकत्वेन प्रमाणीक्रियते ?

अस्माभिस्तु- वाग्दानोत्तरं सप्तपदीतः पूर्वमेव नष्टादिपतिकानां परिसंख्यातकरणांशकविहितेतिकर्तव्यतांशकनियोगधर्मेण पत्यन्तरकरणनियम-विषयत्वेन स्वीक्रियमाणमपि-

**दत्ताक्षतायाः कन्यायाः पुनर्दानं परस्य च**
**देवरेण सुतोत्पत्तिर्दत्ता कन्या न दीयते,**
**देवराच्च सुतोत्पत्तिम्,**
**विधवायां प्रजोत्पत्तौ देवरस्य नियोजनम्**

इत्येवमादिनिषेधसहकृतकलिवर्ज्यादिवचननिचयबलाद् युगान्तरीयविषय-कत्वेन व्यवस्थाप्यते ।

अत एव तत्रत्ये- "क्लीवे च पतिते पतौ" इत्यत्र "पतौ" इति "पतिरिवाचरति" इत्येवंव्युत्पन्नस्याचारक्विवन्तप्रकृतिकसप्तम्यन्तैकवचनस्य पतिशब्दस्य रूपं प्रयुक्तम्, सप्तपदीक्रमणोत्तरमेव वरस्य पतित्वोत्पत्स्य-मानत्वात्,

तथा च **मदनरत्नप्रदीपे– आचारविवेकोद्योते-**
**नोदकेन न वा वाचा कन्यायाः पतिरुच्यते ।**
**पाणिग्रहणसंस्कारात् पतित्वं सप्तमे पदे ॥**
इति यमेनोक्तं सङ्गच्छते ।
एवं तत्रैव पुनर्**मनुकात्यायनाभ्याम**प्युक्तं यथा
**पाणिग्रहणिका मन्त्रा नियतं दारलक्षणम् ।**
**तेषां निष्ठा तु विज्ञेया विद्वद्भिः सप्तमे पदे ॥** इति ।

एतेन- "देवरात् सपिण्डाद्वा" इत्यादिमनुवचनान्तराणि, तादृशानीतराणि च वचनानि सकलान्यपि युगान्तरीयविषयकत्वव्यवस्थित्या स्वयं व्याख्यातानि भवन्तीति न कश्चिद्दोषः ।

तदेतत्सर्वमुत्तरत्र यथावसरं यथावत् प्रपञ्चयिष्यते ।

यच्चाऽपि पुनः **श्रीमद्देवीभागवतपुराणवचनानि** चात्रार्थे प्रामाण्येनोपन्यस्य धृतराष्ट्रपाण्डुपाण्डवानां नियोगोत्पादननिदर्शना विधवाविवाहसाधकत्वेन स्वीकृता; तत्राप्येवं प्रतिब्रूमः:-

पुरा किल प्रायेण यथापूर्वं धर्मस्य वृद्धिर्वरीवर्तिस्म । लोकाश्च बहुशो निजवर्णाश्रमधर्माचरणचतुरा वरीवृतामासुः । तत्राऽपि त्रैवर्णिका यथापूर्वं तपस्विनो ऽत एव सद्यः शापानुग्रहसमर्था विद्यन्ते स्म । तदानीं खलु निजजन्मान्तरीयदुष्कृतवशतः शापवशतो वाऽप्यजातपुत्रत्वेन मृतपुत्रत्वेन वाऽप्यपुत्राणां येषां केषाञ्चिद्राज्ञां, तादृशानामन्येषां वापि केषाञ्चित्कथाऽवशेषानन्तरमराजकस्याऽत एवाऽनर्थबाहुल्यभीतिपरिप्लुतस्यैतस्य जगतः संरक्षणाऽसम्भवेन तत्कृते किल तेषां पुत्राऽत्यावश्यकतया तद्व्यवस्थापकैः कारुणिकैरप्रत्यक्षधर्मसाक्षात्कारे देशकालविप्रकृष्टश्रुतिस्मृतिप्रत्यक्षदृष्टवद्भिर्यदृच्छाचरणाऽप्रतिहतशक्तिशालिभिर्महर्षिभिरेकादशविधाः पुत्राः परिकल्पिताः;

यतः खलु स्मरतिस्म **मनुर्यथा**-

**क्षेत्रजादीन्सुतानेतानेकादश यथोदितान् ।**<br>
**पुत्रप्रतिनिधीन् प्राहुः क्रियालोपान्मनीषिणः ॥ ९।१८०॥** इति ।

ततश्च-

**"अराजके हि लोकेऽस्मिन्सर्वतो विद्रुते भयात् ।**<br>
**रक्षार्थमस्य सर्वस्य राजानमसृजत्प्रभुः"** ॥७।३॥

इति मनुवचनानुसारेण किलाऽनर्थाधिक्यभयविद्रुतस्य राष्ट्रस्य संरक्षणकृते तदेकार्थसृष्टानां राज्ञामन्येषां वा येषां केषाञ्चित्तादृशानां स्वकर्मवशतः शापवशतो वाऽपुत्रत्वे क्षेत्रजादिपुत्रपरिकल्पनद्वारा राष्ट्रस्य संरक्षणनिर्वाहो विहित इति सत्येवावश्यकेऽनन्यगतिके तेषां क्षेत्रजादिपुत्रपरिकल्पनस्यातियुक्तत्वादनिन्द्यत्वाच्च राष्ट्रपरिरक्षणकृतेऽपुत्रत्वजन्यगत्यभावपरिहारकृते च पुरातनस्य सविधिकस्य नियोगस्यापद्धर्म्यत्वमनुस्मृत्य धृतराष्ट्रपाण्डुपाण्डवानां तथातथोत्पादनस्य यथाकथञ्चिदौचित्येऽपि नाद्यत्वे पुनस्तथौचित्यलवमात्रमपि; तथा च- **अपरार्के बृहस्पतिवचनम्,** अन्यत्र

स्मृत्यन्तरवचनञ्चैतदद्वयं शरणीकरणीयमवश्यं भवति; तद्यथा-

**अनेकधा: कृता: पुत्रा ऋषिभिर्ये पुरातनै: ।**

**न शक्यन्ते ऽधुना कर्तुं शक्तिहीनतया नरै: ॥** इति,

**कृतानि यानि कर्माणि दैवतैर्मुनिभिस्तथा ।**

**नाचरेत्तानि कर्माणि श्रुत्वा चापि न कुत्सयेत्** इति च । तथैव पुनरेवमत्रार्थे सकलेऽपि किलाऽ **परार्के व्यासवचनान्य**पीमानि साहाय्यकराणि भवन्ति; तानि यथा-

**धर्मशुद्धिमभीप्सद्भिर्न वेदादन्यदिष्यते ।**
**धर्मस्य कारणं शुद्धं मिश्रमन्यत्प्रकीर्तितम् ॥**
**अत: स परमो धर्मो यो वेदादधिगम्यते ।**
**अवर: स तु विज्ञेयो य: पुराणादिषु स्मृत: ॥**
**वेदार्थवित्तमै: कर्म यत्स्मृतं मुनिभि: पुरा ।**
**तद्यत्नेन समातिष्ठेत्तन्निषिद्धन्तु वर्जयेत् ।**
**ते हि वेदार्थतत्त्वज्ञा लोकानां हितकाम्यया ।**
**प्रदिष्टवन्तो यं धर्मं तं धर्मं न विचारयेत् ॥**
**वेदार्थो य: स्वयं ज्ञातस्तत्राऽज्ञानं भवेदपि ।**
**ऋषिभिर्निश्चिते तस्मिन्का शङ्का स्यान्मनीषिणाम् ।**
**एतेभ्योऽपि यदन्यस्मात्किञ्चिद्धर्माभिधायकम् ।**
**तद्दूरतरतो विद्धि मोहस्तस्याश्रयो मत: ॥** इति ।

तदेत्सर्वमुपरिष्टाद्यथावसरं यथावत् प्रपञ्चयिष्यते ।

अत एव "ने" ति- निषेधसहकृतेन-

**दत्तौरसेतराणान्तु पुत्रत्वेन परिग्रह: ॥**

इतिकलिवर्ज्यवचनेन कलौ क्षेत्रजादिपुत्रपरिग्रहप्रतिषेधोऽपि सुसङ्गच्छते ।

न च- अत्रार्थे-

**उन्मत्तं पतितं क्लीवमबीजं पापरोगिणम् ।**

**न त्यागोऽस्ति द्विषन्त्याश्च न च दायाऽपवर्तनम्** ९।७९॥

इति **मनुवचनेनो**न्मत्तादे: पत्युर्द्विषन्त्या: स्त्रियास्त्यागदायाऽ-पवर्तननिषेधाद्, अत्रैव "द्विषन्त्या:" इति विशेषलिङ्गाच्चोन्मत्तादे: पत्न्या जीवत्यपि भर्तरि पुत्रार्थं पुमन्तरेण सह सम्प्रयोगगम्यमानत्वस्य साधकत्वम्; उन्मत्तादे: पत्यु: परिचरणाद्यनाचरणरूपं द्वेषं कुर्वत्यास्तावतैवाऽपराधेन त्यागदायहरणे न कर्तव्ये-इति तदर्थत्वात् । अन्यथा- एतद्वचनसमनन्तरपूर्वत्र-

प्रमत्तादेः पत्युरपरिचरणात्मकमतिक्रमं कुर्वत्या विभूषणपरिच्छदहरणपूर्वकं मासत्रयं यावद् भोगतः परित्यागोपदेशस्ववचनं विरुध्येत; तद्यथा–

**अतिक्रामेत्प्रमत्तं या मत्तं रोगार्तमेव वा ।**
**सा त्रीन्मासान्परित्याज्याऽ विभूषणपरिच्छदा** ॥९॥७८॥ इति ।

यत्तु पुनः– **अपुत्रां गुर्वनुज्ञातो देवरः पुत्रकाम्यया**, इत्यादि पद्यद्वयात्मकं याज्ञवल्क्यवचनं स्वेष्टसाधकत्वाभिप्रायेण प्रमाणीकृत्य प्रदर्शितम्; तदपि वाग्दानोत्तरत्र सप्तपदीतः पूर्वत्रैव युगान्तरीयमात्रनष्टादिपतिकापद्धर्म्यत्वविषयकत्वेनैव व्यवस्थापयितुं सुशकम्; **नष्टे मृते प्रव्रजिते** इत्यादिनारदपराशरवचनैकार्थत्वात्,

**यस्या म्रियेत कन्याया वाचा सत्ये कृते पतिः ।**
**तामनेन विधानेन निजो विन्देत देवरः** ।९।६९।
**यथाविध्यधिगम्यैनां शुक्लवस्त्रां शुचिव्रताम् ।**
**मिथो भजेताऽऽप्रसवात्सकृत्सकृदृतावृतौ** ।९॥७०।
इति **मनुना** विशेषस्मरणाच्च ।

यच्च पुनः–**अपुत्रेण परक्षेत्रे** इत्यादिकं याज्ञवल्क्यवचनान्तरं तदभिप्रायेणैव प्रमाणीकृत्योल्लिखितं; तदपि पूर्वोदाहृततदीयवचनेनैव समानम्;

**फलं त्वनभिसन्धाय क्षेत्रिणां बीजिनां तथा ।**
**प्रत्यक्षं क्षेत्रिणामर्थो बीजाद्योनिर्गरीयसी ॥९॥५२॥**
**क्रियाऽभ्युपगमात्क्षेत्रं बीजार्थं यत्प्रदीयते ।**
**तस्येह भागिनौ दृष्टौ बीजी क्षेत्रिक एव च ॥९।५३॥**
इति **मनु**वचनविशेषविषयत्वात् । अत एव–
**अद्भिर्वाचा च दत्तायां म्रियेतोर्ध्वं वरो यदि ।**
**न च मन्त्रोपनीता स्यात्कुमारी पितुरेव सा ॥**

इत्यपरार्कस्मृतिचन्द्रिकायां **वशिष्ठवचनं** सुसंगच्छते । एतच्चाऽप्यग्रे यथावसरं सविस्तरं वक्ष्यते ।

यच्चापि पुनः– "दत्तामपि हरेत्पूर्वाच्छ्रेयाँश्चेद्वर आव्रजेद्" इति याज्ञवल्क्यस्यैव वचनान्तरमत्रार्थे प्रमाणीकृत्योपन्यस्तं तदपि साहसमात्रम्; युगान्तरेषु वाग्दानोत्तरं सप्तमपदात्पूर्वं पूर्वस्य वरस्य क्लैव्यपातित्यादिदोषनिश्चये प्राप्तस्योत्तरस्य तु प्राशस्त्यतरनिश्चये च सत्येव तद्विषयत्वात् । एतेनैव–

**कुलशीलविहीनस्य** इत्यादि वशिष्ठवचनमपि व्याख्यातम्; तदभिन्नविषकत्वात्। न च–

**उद्वाहिता ऽपि सा कन्या** इत्यादि नारदवचनं विधवाविवाहस्य साक्षात्साधकम्; "न" इति निषेधसहकृतेन **दत्ता ऽक्षतायाः कन्यायाः पुनर्दानं परस्य च। ऊढायाः पुनरुद्वाहम्** इत्यादिकलिवर्ज्यवचनसाहाय्येन युगान्तरीयमात्रनष्टादिपतिका ऽ ऽ पद्धर्म्यत्वविषयकत्वव्यवस्थापनयैव तदुपपत्तेः। अत एव–

सगोत्रासपिण्डाविवाहे **भोगतस्तां परित्यज्य पालयेज्जननीमिव** इत्येतत्स्मृत्यन्तरवचनं सङ्गच्छते। एतेन–

**अज्ञातदोषेणोढायाः** इत्यादि नारदवचनम्, तथा-

**पाणिग्रहे मृता बाला** इत्यादि **वशिष्ठवचन**ञ्चैतद्द्वयमपि व्याख्यातं भवत्येव; पूर्वैकार्थत्वात्।-

तथा चैतावता– "सा चेदक्षतयोनिःस्याद्गतप्रत्यागतापि वा।

पौनर्भवेन भर्त्रा सा पुनः संस्कारमर्हति" ॥९।१७६।

इति मानववचनान्तरं, तथैतादृशं स्मृत्यन्तरीयवचनजातञ्चैतत्सर्वमपि व्याख्यातं भवत्येव; पूर्वेण समानविषयकत्वात्। यत्तु पुनः स्त्रीणां सर्जनस्यापत्योत्पादनैकदृष्टप्रयोजनकतया तदर्थावबोधकत्वेन– **अपत्यार्थं स्त्रियः सृष्टा** इतिकात्यायनवचनं विधवाविवाहसाधकप्रामाण्येनोल्लिखितम्; तत्रापि पुनरेवं प्रत्याचक्ष्महे–

स्त्रीणां खल्वापाततोऽपत्योत्पादनैकदृष्टप्रयोजनकत्ववत् तदतिरिक्तस्य गार्हस्थ्यधर्माभिरक्षणात्मकस्य दृष्टप्रयोजनान्तरस्याऽपि सत्तायाः प्रोक्तपूर्वतरत्वेऽपि अथ चापि पुनः परमार्थतो विचारे तु सति संभवे दृष्टप्रयोजनस्य पुनरदृष्टप्रयोजनकल्पनाया अन्याय्यतयाऽग्निहोत्रादिगार्हस्थ्यनिर्वाहनिर्वर्तनार्थमवश्यकर्तव्योद्वाहायामदृष्टैकप्रयोजनिकायां धर्मपत्न्यामपि दृष्टप्रयोजनस्वरूपस्याऽपत्योत्पादनस्य दृष्टैकप्रयोजनकरतिसुखादिनाविनाऽभावादविनाभावेनैव द्वयोरप्यपत्योत्पादनरतिसुखादिनोर्दृष्टप्रयोजनस्वरूपयोः प्रासङ्गिकसिद्धिसत्तयैव स्त्रीणां सर्जनस्याऽपत्योत्पादनादिदृष्टैकप्रयोजनकत्वाभावेन पुनरदृष्टैकप्रयोजनकत्वमेव। एतदेवाऽभिप्रेत्य खलु स्पष्टं व्याहृतवान्**मनुः**-

**प्रजनार्थं स्त्रियः सृष्टाः सन्तानार्थञ्च मानवाः।**

**तस्मात्साधारणो धर्मः श्रुतौ पत्न्या सहोदितः ॥९।९६॥** इति।

अत एव हि-"पत्युर्नो यज्ञसंयोगे" इति शब्दानुशासनस्मृतेराचार्य्येण भगवता महर्षिणा पाणिनिनाऽपि 'पत्नी' शब्दस्य **यज्ञसंयुक्तत्वरूपोऽर्थो** व्युत्पादित: । अत एव च- **महाभारते**, अनुशासन-पर्वणि महर्षेरष्टावक्रस्योक्तिरूपेण सन्ततेर्धर्मरूपादृष्टैकप्रयोजनकत्वं प्रतिपादितम्; यथा-**विषयेष्वनभिज्ञोहं धर्मार्थं किल सन्तति:** इति ।

अत एव हि स्त्रीपुंसयोरुद्वाहात्मकस्य सम्बन्धस्यादृष्टसन्धानरूप-सूक्ष्मशास्त्रैकगम्यत्वं प्रतिपाद्य केवलापत्योत्पादनरतिसुखादिदृष्टैकप्रयोजनस्य लौकिकत्वं प्रतिपादितम्; यथा- तत्रैव दानधर्मान्तर्गतविवाहधर्मे-

**भार्यापत्योर्हि सम्बन्ध: स्त्रीपुंसो: स्वल्प एव तु ।**

**रति: साधारणो धर्म:** । इति । अत एव खलु स्त्रीपुंसयोरुद्वाहात्मकस्य सम्बन्धस्य स्वत एव दृष्टैकप्रयोजनस्वरूपाणामपि साधारणधर्मपुत्ररतिसुखादीनां कामानामग्निहोत्रादिनाऽन्त:करणशुद्धिद्वारा सायुज्यमुक्तिरूपैकाऽदृष्टप्रयोजनार्थकत्वं मन्त्रलिङ्गेनैव प्रतिपादितम्; तद्यथा– **ऋक्संहितायाम्**, अष्टमाष्टके, दशममण्डले, सप्तमानुवाके, तृतीयाध्याये, प्रथमसूक्ते, अष्टाविंशकण्डिकायाम्–

**यस्या मु कामा बहवो निविष्टयै** इति ।

तथा चैतावता–एवमवगम्यते– यद्यपि-स्त्रीपुंसयोरुद्वाहात्मकस्य सम्बन्धस्याऽग्निहोत्रादिनैयमिकपुत्रोत्पादनाद्युभयश्रौतस्मार्तधर्मरूपमदृष्टमेकम्, तदितरसाधारणगार्हस्थ्यपुत्रोत्पादनरतिसुखादिरूपं दृष्टञ्चाऽपरमिति प्रयोजन-द्वयस्यैव मुख्यत्वेन दृष्टप्रयोजनापेक्षया ह्यदृष्टप्रयोजनकल्पनायाश्चाऽ–न्याय्यत्वेन दृष्टप्रयोजनस्यैव स्वीकार आपातत: प्रतिभासते;

तथाऽपि दृष्टप्रयोजनाददृष्टप्रयोजनस्य प्रासङ्गिकसिद्धेरसद्भावाद-प्रधानतया पुनरदृष्टप्रयोजनात्तु दृष्टप्रयोजनस्य प्रासङ्गिकसिद्धे: सत्तयैव प्राधान्याददृष्टप्रयोजनमेव कल्पयितुं न्याय्यतरम् ।

अन्यथा– असवर्णायामयथाविधिसंगृहीतायां यस्यां कस्याञ्चिद्यथा-तथाविधायां दासीप्रभृतिकायामपि दृष्टप्रयोजनोपपत्तेरदृष्टैकप्रयोजनबोधकनाना-श्रुतिस्मृतिवचनजातं विरुध्येत; अदृष्टैकप्रयोजननिवारकतत्तद्वचनजातञ्च नोपपद्येत; यथाह **याज्ञवल्क्य:**–

**सत्यामन्यां सवर्णायां धर्मकार्यं न कारयेत्** ॥१॥८८॥ इति ।

तथा– **अपरार्के–वशिष्ठ:**–

**कृष्णवर्णा वै रामा रमणायैव न धर्माय** ॥ इति ।

अत एव–धर्मप्रजासंपन्नायां सत्यां पत्न्यां पत्न्यन्तरपरिग्रहं प्रतिषिद्धवान्– **आपस्तम्ब:– अपरार्के** यथा "धर्मप्रजासंपन्ने दारे नान्यान्कुर्वीताऽ न्यतराऽ पाये तु कुर्वीत, प्रागग्न्याधेयादाधाने हि सती कर्मभि: सम्बध्यते" इति ॥ तदेवम्– **अपत्यार्थं स्त्रिय: सृष्टा:** इति पूर्वोदाहृतकात्यायनवचनन्तु– अबीजिने संप्रदानस्य केवलदृष्टार्थत्वसत्त्वेऽ प्यदृष्टार्थत्वाऽ सम्भवेन बीजिने तु सम्प्रदानस्य पुनरपत्योत्पत्तिसंभवसत्त्वेन तद्द्वारैवाऽदृष्टोपकारकतया दृष्टादृष्टरूपोभयार्थकत्वसम्भवसद्भावाद् "अपत्यार्थम्," इत्यनेनाऽ दृष्टोपकारद्वारभूतस्याऽ पत्यरूपस्य दृष्टार्थस्याऽ र्थवादमात्रप्रदर्शनपरं, नतु केवलदृष्टार्थबोधनपरम्; यतस्तत्समनन्तरम्– **स्त्री क्षेत्रं बीजिनो नरा: । क्षेत्रं बीजवते देयं नाऽ बीजी क्षेत्रमर्हति** । इति प्रपठितम् ।

ततश्च– स्त्रीणां सर्जनस्योद्वाहद्वारा प्रासङ्गिकानामपि दृष्टैकप्रयोजनभूतानां साधारणरतिसुखपुत्रोत्पादनादिगार्हस्थ्यधर्मस्वरूपाणां कामानामग्निहोत्रादिनान्त:करणशुद्धिद्वारा मुक्तिरूपादृष्टैकप्रयोजनार्थकतया तादृशदृष्टादृष्टोभयप्रयोजनस्वरूपस्याऽ प्यपत्यस्य परम्परया मुक्तिरूपादृष्टैकप्रयोजनकत्वसत्ताऽ भिप्रायेणैव तथोक्तम्, यत: "स्त्रियोऽ पत्यार्थं सृष्टा:, अत एव स्त्री क्षेत्रम्, नरास्तु पुनर्बीजिन:, तस्मात् क्षेत्रं बीजवते देयम्, अबीजी तु पुन: क्षेत्रं नार्हति;" इत्येष एव तदर्थसंबन्ध इति नैवाऽस्य **कात्यायनवचनस्य** विधवाविवाहसाधकप्रामाण्यम् ।

तथा चैतावतैव–बीजिन एव क्षेत्रार्हत्वेनाऽ बीजिनस्तु तदनर्हतायाश्च षण्ढादिभ्यो दत्ताया अपि निवर्तनसाधनत्वस्य च प्रमाणत्वेनोपन्यस्य विधवाविवाहस्य प्रामाण्यमभ्युपगतमपि युगान्तरेषु वाग्दानोत्तरं सप्तपदीत: पूर्वं नष्टादिपतिकाविषयत्वेनैव सङ्गमयितुं शक्यमेव । यच्च पुन:–

**न मांसभक्षणे दोषो न मद्ये न च मैथुने**

इति मानवं वचनमत्रैवार्थे साधकत्वेनोल्लिखितम्; तदपि निजमौर्ख्यकृतमेव; तस्य हि मानववचनस्य यथाश्रुतसरलार्थस्वीकारे प्रथमतो भवदीयैव जननी पत्नी वा कथंकथञ्चिद्येन केनचिदुपपतिना सह सम्प्रयुक्ता यदि तदानीं किं कर्तव्यं भवद्भिरिति किमिति च प्रतिवक्तव्यं तत्रेति प्रतिवचनासम्भवान्मौनमास्थाय नानावद्यवादजनितप्रत्यवाययुतैर्भवद्भि: प्रथमत: प्रायश्चित्तं कृत्वैवाऽ स्मदीय: पक्ष: शरणीकर्तव्यो भवेदेव । अस्माभिस्तु–

अविहिताऽ प्रतिषिद्धमांसमद्यमैथुनानां सेवनजन्यदोषाभावप्रतिपादनपूर्वकं पुनस्तन्निवृत्तिजन्यमहाफलप्रतिपादनपरकमेवैतद्वचनमित्येवं संगम्यते इति न क्रिञ्चिदवद्यम्।

यदपि च पुनः **सोमः प्रथमो विविदे** इत्यादेः, **अशून्योपस्था जीवतामस्तु माता** इत्यादेश्च **पारस्करगृह्यसूत्रवचन**निचयस्य प्रामाण्यमाश्रित्य–

**नोद्वाहिकेषु मन्त्रेषु नियोगः कीर्त्यते क्वचित् ।**
**न विवाहविधावुक्तं विधवावेदनं पुनः** ॥९।६५॥

इत्येतस्या मानव्याः स्मृतेः काक्वा स्वरेण तादृशं विपरीतमर्थं स्वीकृत्य विधवाविवाहस्य साधकत्वं प्रदर्शितम्; तदपि नापाततोऽपि किञ्चिद्युक्तम्; तस्य हि **पारस्करगृह्यसूत्र**वचननिचयस्य व्याख्यातपूर्वार्थत्वेनैव नात्राऽर्थे प्रामाण्यमिति तत्साहाय्येन कथङ्कारमेतस्या मानव्याः स्मृतेः काक्वा स्वरेण तादृशो विपरीतोऽर्थः स्वीकर्तव्यः ?,

अथ च **वैवाहिकेषु** मन्त्रेषु क्व नु नाम नियोगः कीर्तितः ?, तथा विवाहविधावपि क्व नु नाम विधवावेदनमुक्तम् ? अपितु न कुत्राऽपि, प्रत्युत वैवाहिकेषु मन्त्रेषु विवाहविधौ च सर्वत्रैव पातिव्रत्यमेव कीर्तितम्; तद्यथा–

तत्र तावत् **पारस्करगृह्यसूत्रे** प्रथमकाण्डे चतुर्थ्यां कण्डिकायाम् द्वादशसूत्रे वरकर्तृकस्य वध्वा वाससः परिधापने मन्त्रः–

**अथैनां वासः परिधापयति, जरां गच्छ परिधत्स्व वासो भवाकृष्टीनामभिशस्तिपा वा । शतञ्च जीव शरदः सुवर्च्चा रयिञ्च पुत्राननुसंव्ययस्वायुष्मतीदं परिधत्स्व वासः** ॥ इति ।

अत्र वाक्यार्थे "सुवर्च्चाः' इत्यस्य "पातिव्रत्यतेजोयुक्ता" इत्यर्थस्य स्वीकृतत्वेन पातिव्रत्यस्यैव पालनं कीर्तितं, न नियोगस्येति । तथा तत्रैव त्रयोदशसूत्रे, वरकर्तृकस्य वध्वा उत्तरीयस्य परिधापने– मन्त्रः–

**अथोत्तरीयम्, या अकृत्तन्नवयं या अतन्वत । याश्च देवीस्तन्तूनभितो ततन्थ । तास्त्वा देवीर्जरसे संव्ययस्वायुष्मतीदं परिधत्स्व वासः** ॥ इति ।

अत्र वाक्यार्थे **जरसे** इत्यस्य **दीर्घकालनिर्दुष्टजीवनाय** इत्यर्थाभ्युपगतत्वेन निर्दुष्टत्वस्य चानियोग एव संभाव्यत्वेनाऽन्यथा तत्त्वाऽसंभाव्यतया पातिव्रत्याऽभिरक्षणमर्थादुक्तं भवतीति न नियोगः कीर्तितः– इति ।

तथा तत्रैव चतुर्दशसूत्रे; कन्यापितृकर्तृकवधूवरसम्मुखीकरणे कन्यासम्मुखं वरकर्तृकपाठे मन्त्रः– **अथैनौ समञ्जयति, समञ्जन्तु विश्वेदेवाः समापो हृदयानि नौ । संमातरिश्वा संधाता समुदेष्ट्री दधातु नौ** ॥ इति ।

अत्र वधूवरयोर्मनोवाक्संमेलनद्वारा मैत्रीकरणरूपार्थस्य सुस्पष्टतया तद्रूपार्थस्य नियोगाभाव एव संभवेनाऽन्यथा तदभाव्यत्वेन पातिव्रत्य-पालनमन्यथाऽनुपपत्त्याऽभिहितं श्रूयते, नतु नियोग इति ।

तथा तत्रैव पञ्चदशसूत्रे कन्याग्रहणपूर्वकनिष्क्रमणे, वरकर्तृकपाठे मन्त्रः–

**पित्रा प्रत्तामादाय निष्क्रामति । यदैषि मनसा दूरं दिशोऽनु पवमानो वा । हिरण्यपर्णो वैकर्णः स त्वा मन्मनसां करोत्वित्यसौ** ॥ इति ।

अत्र **स त्वा मन्मनसां करोतु** इत्यस्य **स वायुस्त्वा भवतीम् मन्मनसां मदेकनिष्ठचित्तां करोतु** इत्यर्थतया तस्य च नियोगाभावस्य संभवादर्थापत्त्या पातिव्रत्यस्यैव परिरक्षणमायाति, न तु नियोगकरणस्येति ।

तथा तत्रैव षष्ठ्यां कण्डिकायाम्, द्वितीयतृतीयसूत्रयोः कुमारी-भ्रात्राद्यञ्जलिपतितकुमारीकर्तृकशमीपलाशमिश्रवपने वरकर्तृकवधूपाठने मन्त्राः-

**ताञ्जुहोति स ह तेन तिष्ठती । अर्यमणं देवं कन्याऽअग्निमयक्षत । सनो अर्यमा देवः प्रेतो मुञ्चतु मा पतेः स्वाहा । इयं नार्युपब्रूते लाजानावपन्तिका । आयुष्मानस्तु मे पतिरेधन्तां ज्ञातयो मम स्वाहा । इमाँल्लाजानावपाम्यग्नौ समृद्धिकरणं तव । मम तुभ्यं च संवननं तदग्निरनुमन्यता-मियꣳ स्वाहा ॥२॥** इति ।

**अथास्यैदक्षिणं हस्तं गृह्णाति, साङ्गुष्ठं गृभ्णामि ते सौभगत्वायहस्तं मया पत्या जरदष्टिर्यथा सः । भगोऽअर्यमा सविता पुरन्धि-र्मह्यन्त्वाऽदुर्गार्हपत्याय देवाः ॥ अमोहमस्मि सा त्वसात्वमस्य मोहम् । सामाहमस्मि ऋक्त्वं द्यौरहं पृथिवी त्वं तावेहि विवहावहै सह रेतो दधावहै प्रजां प्रजनयावहै पुत्रान्विन्द्यावहै बहून्ते सन्तु जरदष्टयः संप्रियौ रोचिष्णू सुमनस्यमानौ पश्येम शरदः शतञ्जीवेम शरदः शतं शृणुयाम शरदः शतम्** ॥३॥ इति च ॥

अत्र पूर्वत्र द्वितीयसूत्रमन्त्रेषु वाक्यार्थनिष्कर्षसमीक्षणे वरवध्वोरवियोगाऽन्योन्याऽनुरागप्रार्थनया पातिव्रत्यस्य स्पष्टं श्रुतत्वाद्दैवात्परेतेऽपि पत्यौ कथन्नाम विधवाया नियोगः, सति तु तस्मिन्परेतस्याऽनपत्यस्य पत्युः पारत्रिककृत्याय को नाम पुरः सरेत्, असति हि तस्मिन्सैव पुरःसरेति दैवाच्छरीरवियोगेपि यावज्जीवं पत्यर्थं हिताचरणेनावियुक्तेव कालं क्षपयन्ती पातिव्रत्यव्रतप्रभावतोन्ते पतिलोकं समधिगम्य सह पत्यैव चिरं रमेतेति न कदाचन वियोगोऽन्योन्याननुरागो वेति प्रतीयते ।

एवमत्र तृतीयसूत्रमन्त्रेषु- वाक्यार्थनिष्कर्षसमालोचने **भगोऽर्यमा सविता** इत्यारभ्य- **त्वाऽदुर्गार्हपत्याय देवा** इत्यन्तमन्त्रवाक्यतो वह्निरूपभगादिभिरुपभुक्तत्वप्रतीतेः स्त्रीणां बहुभर्तृकात्वमापातत एवायाति, तथापि तत्रैव वाक्यैकवाक्यतायाम्, तथा पूर्वत्र द्वितीयसूत्रस्थार्**यमण**-मित्याद्येकमन्त्रवाक्यार्थसंमेलने मनुष्यरूपवरलाभाय पूर्वमिष्टेभ्योऽत एव प्रसन्नेभ्यो वह्निरूपभगादिभ्यो वरं प्रार्थितवतीनां स्त्रीणां तैरनुपभुक्ततया न पुनस्तासां बहुभर्तृकात्वमिति सुस्पष्टं गम्यमानत्वाद्, एवं तत्रैव वाक्यान्तरार्थविचारे वरवध्वोर्यावज्जीवं पारस्परिकानुरागसौमनस्यसन्तति-प्रभृतिप्राप्तिप्रार्थनायाः स्पष्टश्रुत्या नैते मन्त्रा विधवानियोगार्थे पर्यवस्यन्तीति वैवाहिकाखिलमन्त्रवाक्यार्थपूर्वापरविचारे पातिव्रत्यव्रतस्यैव पालनमर्थादुक्तं भवतीति न नियोगो धर्म्य इति ।

तथा तत्रैव प्रथमकाण्डे सप्तम्यां कण्डिकायाम्, तृतीयसूत्रे, वधूवरयोरग्निपरिक्रामणे वरकर्तृकपाठे मन्त्रः—

**अथ परिक्रामतः, तुभ्यमग्रे पर्यवहन्सूर्यां वहतु ना सह । पुनः पतिभ्यो जायां दाग्ने प्रजया सह** ॥ इति । अत्रापि—पूर्ववदापाततः स्त्रीणां बहुभर्तृकात्वप्रतीत्या विधवानियोगो निराबाध इति गम्यते, तथापि पूर्ववदेव वाक्यान्तरैकवाक्यतायां न कश्चित्तथाऽर्थो निश्चेतुं शक्यते—इतिनेतोपि विधवानियोगो धर्म्य इति पातिव्रत्यरक्षणमेव युक्ततरं निश्चिनुम इति ।

तथा तत्रैव, अष्टम्यां कण्डिकायाम्, अष्टमसूत्रे, वरकर्तृकवधू-हृदयालम्भने वरकर्तृकपाठे मन्त्रः—

**अथास्यै दक्षिणा ऽं समधिहृदयमालभते, मम व्रते ते हृदयं दधामि मम चित्तमनुचित्तं तेऽस्तु मम वाचमेकमना जुषस्व प्रजापतिष्ट्वा नियुनक्तु मह्यम्** ॥ इति ।

अत्रापि वाक्यार्थनिष्कर्षसमालोचने वरवध्वोर्यावज्जीवं पारस्परिकानुरागस्य, एवम्, कायवाङ्मनोभिरव्यभिचरितमनोवृत्तेः प्रार्थनया पातिव्रत्यमेव कीर्तितं, न नियोगोऽभिहित इति कथन्नाम भवद्भिर्नियोगोऽभिधीयते– इति ।

ननु चैवमपि–ऋक्संहिताष्टमाष्टकदशममण्डलसप्तमानुवाकतृतीयाध्यायप्रथमसूत्रपठिते– **दशास्यां पुत्रानाधेहि पतिमेकादशं कृधि** ॥ इत्येतस्मिन् वाक्ये "पतिमेकादशं कृधि" इत्यस्य– "एकादशमेकादशसंख्यापूरकं, पतिं पाणिग्रहीतारम्, कृधि कुरु" इत्येवमर्थाङ्गीकर्तव्यतया– एकादशपतिकरणलिङ्गेनैव सधवानामपि पुनर्विवाहसिद्धौ विधवानान्तु का कथा ?, तथा च विवाहविधावपि पुनर्विवाहो विहित एवेति चेद् ? अत्रापि पुनरेवं प्रतिवदामः–

तद्यथा–तत्र तावद्– एतस्मिन्नेव वाक्ये **दशाऽस्यां पुत्रानाधेहि** इत्येतेन, तथा **इमां त्वमिन्द्र मीढ्वः सुपुत्रां सुभगां कृणु** इत्येतत्पूर्वार्धेन च सह "पतिमेकादशं कृधि" इत्येतस्य वाक्यैक-वाक्यतावस्थायाम्– "हे इन्द्र ? त्वं मीढ्वः स्तुतः सन्, इमामेतां पुरतो विवाहमण्डपे वर्तमानां वधूं सुपुत्रां भविष्णुशोभनपुत्रां सुभगां सौभाग्यवतीं कृणु कुरु, "कति च पुत्राः" इत्याकाङ्क्षायाम्– अस्यामेतस्यां वध्वां दश दशसंख्याकान्पुत्रानाधेहि निधेहि, पतिमत्रैव पुरतस्ते पाणिग्रहीतारमेकादशं पत्युरपि पोष्यतया पुत्राणां प्राधान्यात्तद्दशकोत्तरगणनापेक्षयैवैकादशसंख्यापूरकं कृधि कुरु" इत्येवं समष्टिवाक्यार्थस्वीकर्तव्यत्वेन यावत्स्त्रीणां पुनर्विवाहकथायाः स्वप्नेऽपि चिन्तयितुमत्यन्तमनौचित्यात् ।

अत एव तत्समष्टिमन्त्रवाक्यतः पूर्वत्र पठितस्य **अघोरचक्षुरपतिघ्न्येधिशिवा पशुभ्यः सुमनाः सुवर्च्चाः, वीरसूर्देवकामास्योना शं नो भवद्विपदेशं चतुष्पदे** ॥

इति समष्टिमन्त्रवाक्यस्य, तथैव तदुत्तरत्र पठितस्य–

**सम्राज्ञी श्वशुरे भव सम्राज्ञी श्वश्र्वां भव ।**

**ननान्दरि सम्राज्ञी भव सम्राज्ञीऽ अधिदेवृषु** ॥

इत्येतन्मन्त्रवाक्यस्य च निष्कर्षार्थपर्य्यालोचने हि न कथंकथमपि पुनर्विवाहकथालवमपि स्फुरति, प्रत्युत– पातिव्रत्यकथामात्रमार्थिकं संस्फुरति । अत एव हि–

**ऋक्संहिताया** अष्टमाष्टकदशममण्डलसप्तमानुवाकतृतीयाध्याये प्रथम-सूक्तपरिशिष्टे- **अविधवा भव वर्षाणि शतं साग्रंतु सुव्रता ।**

**तेजस्वी च यशस्वी च धर्मपत्नी पतिव्रता ॥**

**जनयेद्बहुपुत्राणि मा च दु:खं लभेत्क्वचित् ।**

**भर्ता ते सोमपा नित्यं भवेद्धर्मपरायण: ॥**

**अष्टपुत्रा भव त्वं च सुभगा च पतिव्रता**

**भर्तुश्चैव पितुर्भ्रातुर्हृदयानन्दिनी सदा ॥**

**इन्द्रस्य तु यथेन्द्राणी श्रीधरस्य यथा श्रिया ।**

**शङ्करस्य यथा गौरी तद्भर्तुरपि भर्तरि ॥**

**अत्रेर्यथा ऽ नसूया स्याद्वशिष्ठस्या ऽ प्यरुन्धती ।**

**कौशिकस्य यथा सती तथा त्वमपि भर्तरि ॥**

**ध्रुवैधि पोष्यामपि मह्यं त्वादाद् बृहस्पति: ।**

**मया पत्या प्रजावती सञ्जीव शरद: शतम् ॥**

इत्येवं समाम्नातै: स्पष्टार्थैरेतैर्मन्त्रवाक्यै: पतिव्रताग्रणीनामिन्द्राणी-श्रीगौर्यनसूयारुन्धतीसतीनां निदर्शनया वर्षशतकं यावदवैधव्यसौव्रत्यतेजस्वि-त्वयशस्वित्वपातिव्रत्यबहुपुत्रजनित्वदु:खालाभस्वभर्तृकर्तृकसोमपात्वधर्मपरायण-त्वाऽष्टपुत्रात्वसौभाग्यपातिव्रत्यभर्तृपितृभ्रातृहृदयानन्दित्वरूपाशीराशिवचनद्वारा द्विस्त्रि: पुन: पुनरुक्त्या पातिव्रत्याभिधानाद् यावत्स्त्रीणां पुनर्विवाहस्य सकृन्मानसिकचिन्ता स्वप्नजाताऽपि प्राज्यप्रत्यवायकरी; स्वप्नजनकवासना-जनकत्वाच्चिन्ताया इत्येवमस्मदीयसिद्धान्तवचनमेव सर्वथैव श्रेयस्करतरम् ।

तथा चैतावता नियोगोत्पन्नस्यापि स्वक्षेत्रजत्वेनैव पुत्रत्वं, पैतृकरिक्थहारित्वं च क्षेत्रस्वामिसम्बन्धिन एव धर्म्यत्वेनाऽभिधानस्याऽतीव योग्यत्वमभिदधद्भिरत्रार्थे–

**हरेत्तत्र नियुक्तायां जात: पुत्रो यथौरस:**

इत्यादिपद्यद्वयात्मकम्, तथा–

**यथा गोश्वोष्ट्रदासीषु महिष्यजाविकासु च**

इत्यादिं पद्यषट्कात्मकञ्च मानवं वचनजातं प्रमाणीकृत्य विधवाविवाहसाधकत्वेनोल्लिखितमपि युगान्तरेषु वाग्दानोत्तरत्र सप्तपदीतः पूर्वत्र, सप्तपदीत उत्तरत्राऽपि च नष्टादिपतिकासु सविधिकनियोगोत्पन्नविषयत्वेन व्यवस्थापनयैव समुपपन्नतरं भवत्येव ।

एतेन, अम्बिकाऽम्बालिकयोर्व्यासात् तथा कुन्तीमाद्र्योर्धर्मवायुशक्रदस्रेभ्यः समुत्पादितानां धृतराष्ट्रपाण्डुपाण्डवानां चित्राङ्गदविचित्रवीर्य्यपाण्डुसंबन्धि साक्षात्क्षेत्रजपुत्रत्वस्याविरुद्धत्वमेवेति तेषां क्षेत्रस्वामिनां दायग्रहणं, पिण्डदानञ्चैतद्द्वयमपि समुपपन्नतरं भवत्येवेति प्रदर्शितम् । तदेवम्-

पुनः संस्कारस्यापि नियोगपदार्थतया सप्तपदीतः पूर्वं परञ्च नष्टादिपतिकानां नियोगोपदेशकपूर्वोक्तनानास्मृतिवचसां युगान्तरीयाऽऽपद्धर्म्यत्वविषयकत्वव्यवस्थापनयैव समुपपत्तेर्न पुनर्विधवाविवाहसाधकत्वमित्यस्मदीय एव सिद्धान्तपक्षो विजयतेतराम्—इति सर्वं शुभम् ।

इति पूर्वार्द्धम् ।

इति श्रीपण्डितडिल्लीराजशर्मकृते
**विधवोद्वाहतिमिरालोके**
पूर्वार्द्धं समाप्तम् ।
शुभम् ।

# अथोत्तरार्द्धम्

अथच ननु ? पूर्वोक्तनानास्मृतिवचांसि युगान्तरीयापद्धर्म्यत्वविषयकत्वव्यवस्थापनयोपपादयतां भवतां कलिवर्ज्यवचनबलात्कलौ परित्यक्तोऽपि युगान्तरेषु तु पुनःसत्तयैव सनातनधर्म एवायं विधवाविवाह इति चेद्, अत्रैवं प्रतिवदामः-

यद्यपि नियोगयाथार्थ्यं विजानतोऽपि तत्रत्यं परिसंख्येयत्वांशं, विधेयत्वांशञ्चातीत्य कामचारेण दुराचरतो वेनस्य राज्ञो राज्यप्रशासनसमयतो विधवानां यदृच्छया यत्रतत्र व्यभिचाररूपस्य निर्विधिकनियोगस्य पशुधर्मवत्प्रचुरप्रचाराद् धर्मकालयो राजमूलकतया तदुत्तरमपि दृष्टलोभकस्मृत्यधिकरणन्यायेन श्राद्धे मार्जारबन्धनवत्कैश्चिदेव भवादृशैर्विधवाजनकुचमर्दनसमर्पितस्वान्तैः परिगृहीतस्यैतस्य विधवाविवाहस्य भवदितराणां सर्वेषामप्यसनातनत्वमधर्म्यत्वञ्च वक्तुं सुशकमेव; अत एव धर्मकालयो राजमूलकत्वमुक्तं **महाभारते शान्तिपर्वणि** '६८-६९-७५'तमेष्वध्यायेषु, तद्यथा-

**राजमूलो महाप्राज्ञ ? धर्मो लोकस्य लक्ष्यते ।**
**प्रजा राजभयादेव न खादन्ति परस्परम् ॥**
**कालो वा कारणं राज्ञो राजा वा कालकारणम् ।**
**इति ते संशयो माभूद्राजा कालस्य कारणम् ॥**
**राज्ञा हि पूजितो धर्मस्ततः सर्वत्र पूज्यते ।**
**यद्यदाचरते राजा तत्प्रजानां हि रोचते ॥** इति ।

तथा **गीतायामप्युक्तम्**-

**यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।**
**स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥** इति ।

अत एव **मनुना** यथाविधिनियुक्तयोरप्यग्रजानुजयोः परस्परभार्यायां पुत्रार्थव्यतिरेकरूपायामनापदि गच्छतोः पातित्यमुक्त्वा सविधिकनियोगप्रयोजनीभूतपुत्रोत्पत्तिनिर्वर्तनानन्तरं पारस्परिकगुरुवत्त्वस्नुषावत्त्ववृत्तिञ्चोपदिशता पुनस्तदतिक्रमेण परस्परं कामचारेण वर्तमानयोः सान्योन्यभार्ययोः स्नुषागत्वगुरुतल्पगत्वरूपं महापातकमतिदिष्टम्; तद्यथा-

**ज्येष्ठो यवीयसो भार्यां यवीयान्वाऽग्रजस्त्रियम् ।**
**पतितौ भवतो गत्वा नियुक्तावप्यनापदि ॥ ९।५८**

**विधवायां नियोगार्थे निवृत्ते तु यथाविधि ।**
**गुरुवच्च स्नुषावच्च वर्तेयातां परस्परम् । ॥९॥६२॥**
**नियुक्तौ यौ विधिं हित्वा वर्तेयातां परस्परम् ।**
**तावुभौ पतितौ स्यातां स्नुषागगुरुतल्पगौ ॥९॥६३॥**

इति । अत एव चाऽ नियुक्तानिर्विधिकनियुक्तासुतयोर्दायग्रहणमपि स्वेनैव निषिद्धं सुतरां सङ्गच्छते; तद्यथा-

**अनियुक्तासुतश्चैव पुत्रिण्याप्तश्च देवरात् ।**
**उभौ तौ नार्हतो भागं जारजातककामजौ ॥९।१४३॥**
**नियुक्तायामपि पुमान्नार्यां जातोऽविधानतः ।**
**नैवाऽर्हः पैतृकं रिक्थं पतितोत्पादितो हि सः ॥९।१४४॥**

इति । तथापि पुराकल्पे किल कदाकदाचिदत्यावश्यके सत्येवेतिकर्तव्यतांशमात्रे विधेयत्वेन दृष्टस्याऽत एव सविधिकं प्रवृत्तस्यैतस्य नियोगस्य पुराकल्पीयानामसनातनत्व- मधर्म्यत्वञ्च वक्तुन्त्वशक्यम्,

**देवराद्वा सपिण्डाद्वा स्त्रिया सम्यङ्नियुक्तया ।**
**प्रजेक्षिताऽधिगन्तव्या सन्तानस्य परिक्षये ।९।५९॥**
**विधवायां नियुक्तस्तु घृताक्तो वाग्यतो निशि ।**
**एकमुत्पादयेत्पुत्रं न द्वितीयं कथञ्चन ॥९।६०॥**
**द्वितीयमेके प्रजनं मन्यन्ते स्त्रीषु तद्विदः ।**
**अनिर्वृतं नियोगार्थं पश्यन्तो धर्मतस्तयोः ॥९॥६१॥**

इत्येवंवचनैः सर्वथा सन्तानपरिक्षयात्मिकायामेव विपदि वर्तमानायां पुनस्तेनैव सविधिकनियोगोपदेशात् ।

अत एव सविधिकनियुक्तापुत्रस्य क्षेत्रस्वामिसम्बन्धिधनग्रहणमभिधायैका- दशविधपुत्रलक्षणप्रदर्शनप्रकरणे क्षेत्रजत्वं पुनर्मनुनैवोपदिष्टं सुसङ्गतं भवत्येव; तद्यथा-

**हरेत्तत्र नियुक्तायां जातः पुत्रो यथौरसः ।**
**क्षेत्रिकस्य तु तद्बीजं धर्मतः प्रसवश्च सः ॥९।१४५॥**
**धनं यो बिभृयाद्भ्रातुर्मृतस्य स्त्रियमेव वा ।**
**सोपत्यं भ्रातुरुत्पाद्य दद्यात्तस्यैव तद्धनम् ॥९।१४६॥**
**यस्तल्पजः प्रमीतस्य क्लीवस्य व्याधितस्य वा ।**
**स्वधर्मेण नियुक्तायां स पुत्रः क्षेत्रजः स्मृतः ॥९॥१६७॥**

इति ॥ तथा च **मनुनै**तावता वचनजातेन सविधिकविधवानियोगस्य सनातनत्वं, धर्म्यत्वञ्चोभयं स्पष्टं प्रतिपादितमेव; परन्तु तेनैव पुनः-

**नान्यस्मिन्विधवा नारी नियोक्तव्या द्विजातिभिः ।**
**अन्यस्मिन्हि नियुञ्जाना धर्मं हन्युः सनातनम् ॥९।६४॥**
**नोद्वाहिकेषु मन्त्रेषु नियोगः कीर्त्यते क्वचित् ।**
**न विवाहविधावुक्तं विधवावेदनं पुनः ॥९।६५॥**
**अयं द्विजैर्हि विद्वद्भिः पशुधर्मो विगर्हितः ।**
**मनुष्याणामपि प्रोक्तो वेने राज्यं प्रशासति ॥९॥६६॥**
**स महीमखिलां भुञ्जन्राजर्षिप्रवरः पुरा ।**
**वर्णानां संकरं चक्रे कामोपहतचेतनः ॥९।६७॥**
**ततः प्रभृति यो मोहात् प्रमीतपतिकां स्त्रियम् ।**
**नियोजयत्यपत्यार्थं तं विगर्हन्ति साधवः ॥९।६८॥**

इत्यादिभिर्वचनैरधर्म्यत्वमर्वाचीनत्वञ्च प्रतिपाद्य प्रतिषिद्धत्वाद्– अत्रैवमवगम्यते–

यद्यप्ययं सविधिको नियोगः पुराकल्पे स्थित एवाऽपि बहुविप्रतिपत्तिविषयतया न सर्वत्र सर्वदा सर्वैः स्वीकृत इति धर्म्योऽप्यधर्म्यत्वेन मतोऽप्यप्रत्यक्षश्रुतिस्मृतिसाक्षात्कर्तृभिरेवापद्धर्म्यत्वेन दृष्टो वर्ततेस्म; तथापि सार्वभौमतामधिगतवन्तमत एव राजर्षिप्रवरं वेनं तेभ्यस्तेभ्यो विद्वद्वरद्विजेभ्यो नियोगरहस्यं यथावद्विजानन्तमपि मदनमथितमानसं सन्तं विधवाऽधरचुम्बनसमर्पितस्वान्तसर्वस्वं प्रमीतपतिकानां सपुत्राणामनीप्सितसन्ततीनामप्यनापदि यदृच्छया यत्र क्वचन सर्वत्राऽपि बलान्नियोजनं प्रशासतमेवारभ्य दृष्टलोभकस्मृत्यधिकरणन्यायेन श्राद्धे मार्जारबन्धनवत्प्रवृत्तस्यैतस्य निर्विधिकविधवानियोगस्य धर्म्यत्वं मन्यमानासु प्रजासु यत्रतत्र सर्वत्रैव पशुधर्मवत्प्रचुरप्रचारादर्वाचीनस्याऽपि सनातनवदधर्म्यस्यापि धर्म्यवदाभासमानस्य तेस्तैर्विद्वद्वरद्विजैर्मुहुर्मुहुर्निषिध्यमानस्यापि धर्मकालयो राजमूलत्वेन दुर्वृत्तवेनराजप्रशासनप्राबल्येनोत्तरोत्तरमधिकाधिकपरिवृद्ध्या लोके वर्णसंकराद्यमर्थबाहुल्यं दृष्टवद्भिस्तैस्तैरेव कारुणिकैस्तादृशदुराचारपरायणमत एव राज्यानर्हं तमुन्मथ्य किल तत एव जनितपृथुभिःसद्भिस्तत एव खल्वेतस्य सविधिकस्यापि विधवानियोगस्य पशुधर्मवत्त्वं समीक्ष्य साकल्येनैव प्रतिषेधो व्यधायि किलेत्यत एव हि नाऽयं धर्म्योऽपि सविधिको नियोगो मनोरभिमतः; यतः "धर्मं हन्युः सनातनम्" इत्युक्तवता तेन स्त्रीणां यावज्जीव-

मेकपतित्वस्यैव सनातनधर्म्यत्वं प्रतिपाद्य– **अयं द्विजैर्हि विद्वद्भिः** इत्यादिना क्वाचित्कापद्धर्म्यत्वेन दृष्टोप्येष नियोगो न मया केषाञ्चिदपि प्रोक्तः, अपितु विद्वद्भिर्द्विजैरेव दुर्वृत्तं वेनराजं प्रोक्तः, स चायं तैः प्रोक्तोऽपि न सुष्ठु जातः, यतो दुर्वृत्तवेनराजो विधवालिङ्गनकामुकः सन्वर्णसंकरं कृतवान्; तस्मादतः परं विधवानां सविधिमपि नियोगं करिष्यमाणं वेनराजस्य नियोगोपदेशका अपि साधवो विगर्हन्तीति तदनुपदेशकस्त्वहं किंवक्तव्यः इत्युक्तं भवत्येव ।

एतेन खल्वेतदेव प्रतीयते–

वेनराजतः पूर्वतो युगान्तरमात्रे परमतमात्रसिद्धस्य नियोगस्यैतस्य सविधिकस्यैवाऽऽपद्धर्म्यत्वं मनोरप्यभिमतमिति; अत एव–

**उक्तो नियोगो मनुना निषिद्धः स्वयमेव तु ।**
**युगक्रमादशक्योऽयं कर्तुमन्यैर्विधानतः ॥**
**तपोज्ञानसमायुक्ताः कृतत्रेतायुगे नराः ।**
**द्वापरे च, कलौ नृणां शक्तिहानिर्विनिर्मिता ॥**
**अनेकधाः कृताः पुत्रा ऋषिभिर्ये पुरातनैः ।**
**न शक्यन्तेऽधुना कर्तुं शक्तिहीनतया नरैः ॥**

**इत्यपरार्के बृहस्पतिबचनं** सुसङ्गतम् । न च मनुनैव विहितप्रतिषिद्धत्वान्न युगान्तरीयत्वमपितु वैकल्पिकत्वं नियोगस्येति वाच्यम्; "आपद्धर्म्यत्वेन युगान्तरीयविषयकतया परमतेन प्रोक्तोऽपि दुर्वृत्तवेनराज-दुराचारवशतो निर्विधिकप्रवृत्त्यानर्थबाहुल्याद् मनुना पुनःस्वयमेव निषिद्धः;यतः– कलौ नराणां शक्तिहीनतया पुनः पुनरेवमनर्थबाहुल्यमापद्येतेति-मनोरन्तःकरणाऽभिप्रायाद्" इति तदर्थत्वात् । अत एव हि **बौधायनोपि** विधवानियोगस्य पुराकल्पीयत्वमभिधाय पुनः साम्प्रतं प्रतिषेधं स्मरतिस्म यथा–

**विधिर्यो निष्ठितः पूर्वं क्रियते नहि साम्प्रतम् ।**
**पुराकल्पे स एतच्च विधवायां नियोजनम् ॥**

इति । न च– "एकमुत्पादयेत्पुत्रं न द्वितीयं कथंचन"

इत्युक्तवता **मनुना**–"द्वितीयमेके प्रजनं मन्यन्ते स्त्रीषु तद्विदः"

इति पुनः कथनादेकपुत्रोत्पादनपर्य्यन्तस्य नियोगस्य स्वाभिमतत्वेन द्वितीयपुत्रोत्पादनपर्य्यन्तस्यैव नियोगस्य परमतत्वम्, अत एव पूर्वत्र–

"न द्वितीयं कथञ्चन" इति, तदुत्तरत्र–"तद्विदः" "एके" इति च वाक्यपदानां स्वारस्यसङ्गतिरिति कथं नियोगस्य सर्वथा मनोरनभिमतत्वमिति

वाच्यम्; "सविधिकनियोगस्याऽपि युगान्तरेषु तादृशद्विविधात्मकं मतान्तरं विद्यतेस्म" इत्येवंमात्रतदभिप्रायात् ।

अत एव **मनुना** सविधिकस्य नियोगस्य युगान्तरीयाऽऽपद्धर्म्यत्वं साक्षाद्दृष्टवताऽपि वेनराजदुश्चेष्टितवशेन निर्विधिकप्रवृत्त्या सविधिकस्याप्यनर्थकरत्वानुस्मृतिमन्तःकरणे निधाय परमतेन प्रदर्शितस्यापि पुनः स्वमतेन प्रतिषेधं कृतवता परमतप्रदर्शकनवमाध्यायस्थकतिपयवचनप्रकथनात्पूर्वतरमेव पञ्चमाऽध्याये ह्येवं प्रोक्तम्–

**अपत्यलोभाद्या तु स्त्री भर्तारमतिवर्तते ।**
**सेह निन्दामवाप्नोति पतिलोकाच्च हीयते ॥५॥१६१॥**
**नान्योत्पन्ना प्रजाऽस्तीह न चाप्यन्यपरिग्रहे ।**
**न द्वितीयश्च साध्वीनां क्वचिद्भर्तोपदिश्यते ॥५॥१६२**
**पतिं हित्वाऽपकृष्टं स्वमुत्कृष्टं या निषेवते ।**
**निन्द्यैव सा भवेल्लोके परपूर्वेति चोच्यते ॥५।१६३॥**
**व्यभिचारात्तु भर्तुः स्त्री लोके प्राप्नोति निन्द्यताम् ।**
**शृगालयोनिं प्राप्नोति पापरोगैश्च पीड्यते ॥५।१६४॥** इति ।

अत एव नवमाध्यायेऽपि भ्रातृभ्रातृपत्न्योः परस्परं गुरुत्वं स्नुषात्वञ्च स्वमतेनाऽतिदिश्य तयोः सप्तपदीत उत्तरं परमतेन सविधिकं नियोगं यथाकथंचिद् दर्शयित्वा पुनः स्वमतेन बीजप्रदर्शनपूर्वकं प्रतिषिध्य पुनः सप्तपदीतः पूर्वं सविधिकं नियोगं युगान्तरीयाऽऽपद्धर्म्यत्वविषयकं प्रकथयाञ्चकार ।

अत एव पुनर**परार्के ब्रह्मपुराणवचनं** कलौ स्त्रीणां पुनर्विवाहस्य, देवरादितः पुत्रोत्पादनस्य, स्वातन्त्र्यस्य च प्रतिषेधे कलौ नराणां पातकित्वरूपं बीजं प्रदर्शयति तद्यथा–

**स्त्रीणां पुनर्विवाहस्तु देवरात्पुत्रसन्ततिः ।**
**स्वातन्त्र्यञ्च कलियुगे न कर्तव्यं कदाचन ॥**
**यतः पातकिनो लोके नराः सन्ति कलौ युगे** ॥ इति

एवञ्चैतावता– सविधिकस्यैवैकस्याप्येतस्य नियोगस्य कदाचिद्युगान्तरेषु विधानं, कदाचित्तु कलियुगे प्रतिषेधनञ्चेत्युभयत्रापि तत्तद्राजप्रजाद्याचरणसौष्टवदौष्टवादिपरिणामिनोऽत एवाऽनन्तक्रियाधिकरणात्मकस्य कालस्य तारतम्यरूपं बीजं स्पष्टं प्रदर्शितं भवति; धर्मकालयो राजमूलत्वात्, अन्यथा–

अनादेरनन्तस्य च विभोरखण्डस्य स्वाश्रयसंयोगिसंयोगघटकस्य कालस्यैक्येन तथातारतम्याऽ सम्भवात्।

अत एव सविधिकस्यैतस्य नियोगस्य युगान्तरेष्वेव कर्तव्यत्वेन कलौ तु पुनरकर्तव्यतया प्रतिपाद्ययुगान्तरीयविषयकत्वव्यवस्थापनमतीव युक्तं प्रतिभाति,

एतेनैव हि– तानि तानि नानाश्रुतिस्मृतिवचनानि युगान्तरीयविषयकत्व-व्यवस्थापनयोपपादयतामस्माकं कलिवर्ज्यवचनबलात्परित्यक्तस्याऽ पि युगान्त-रेषु तु पुरातनतया धर्म्यत्वेन परिगृहीतस्यैतस्य विधवानियोगस्य नैव सनातनत्वं, धर्म्यत्वञ्च; नहि पुरातनत्वमात्रेण धर्म्यत्वम्, न च धर्म्यत्वेनैवापि पुरातनत्वम्, नाऽ पि केवलं पुरातनत्व-धर्म्यत्वाभ्यामपि सनातनत्वं, कर्तव्यत्वञ्च, अन्यथा-

**पुराकल्पे तु नारीणां मौञ्जीबन्धनमिष्यते ।**
**अध्यापनञ्च वेदानां सावित्रीवाचनं तथा ॥**

इति **निर्णयसिन्धौ यमस्मृतेः** पुराकल्पीयनारीषु धर्म्यत्वेनोपदिष्टानां मौञ्जीबन्धनवेदाध्यापनसावित्रीवाचनादिकर्मणां पुरातनत्वेन, धर्म्यत्वेन च पुनरिदानीन्तनीष्वपि नारीषु सनातनत्वेन कर्तव्यत्वेन चोपदेष्टव्यत्वं भवेदेव; नहि चैतद्युज्यते, तथैतदपि नैव युज्यते । अत एव तत्रैव **हारीतः**–

**द्विविधाः स्त्रियो ब्रह्मवादिन्यः सद्योवध्वश्च । तत्र ब्रह्मवादिनीनामुपनयनमग्नीन्धनं, वेदाध्ययनं, स्वगृहे च भैक्ष्यचर्य्या, सद्योवधूनामुपनयनं कृत्वा विवाहः कार्यः ॥** इति ।

अत्रार्थे– किल काचन पुरावृत्तनिदर्शनाऽ पि शरणीकरणीया दृश्यते– यथाहि– पुरा किल धर्माऽ धर्माभिज्ञोऽ पि कश्चिदजीगर्त ऋषिः क्षुत्पीडितः सन्नधर्म्यमपि शुनःशेपनाम्नः स्वसुतस्य विक्रयं गोशतेन कृत्वा यज्ञयूपे बद्धं तमेव सुतं प्राणत्राणकृते पुनर्गोशतप्राप्त्या हन्तुं प्रवृत्तवान्, यतःस्मरतिस्म **मनुर्**यथा–

**अजीगर्तः सुतं हन्तुमुपासर्पद् बुभुक्षितः ।**
**न चाऽ लिप्यत पापेन क्षुत्प्रतीकारमाचरन्** ॥१०।१०५। इति ॥

एवं धर्माधर्मपारङ्गतोऽ पि महर्षिर्वामदेवो बुभुक्षार्दितः सन्प्राणत्राणार्थं शुनो मांसं जिघत्साञ्चकार; एतदपि **मनुरेव** स्मरतिस्म पुनर्यथा–

**श्वमांसमिच्छन्नार्त्तोऽ त्तुं धर्माधर्मविचक्षणः ।**
**प्राणानां परिरक्षार्थं वामदेवो न लिप्तवान्** ।१०।१०६। इति ।

एवं धर्माधर्ममर्माभिज्ञोपि महर्षिर्विश्वामित्रः क्षुत्पीडितः सँश्चण्डाल-

हस्तात्कुक्कुरमांसमाच्छिद्य भोक्तुमुद्युङ्क्तेस्म; एतदपि पुन: स एव स्मरतिस्म यथा—

**क्षुधार्तश्चात्तुमभ्यागाद्विश्वामित्र: श्वजाघनीम् ।**

**चण्डालहस्तादादाय धर्माधर्मविचक्षण: १०।१०८॥** इति ॥

तथा च— किमिति ते देशकालविप्रकृष्टानामपि धर्माधर्माणां साक्षात्स्मर्तारो द्रष्टारश्च न वर्तन्तेस्म ? किं कृतं तै: ?, किमयं तेषां धर्मोऽधर्मो वा ?,अधर्मश्चेत् कथंकारं तैर्न परित्यक्त:?, कथं वा पापैर्न लिप्तवन्तस्ते ?, धर्म एव वा चेत् कथन्नाम तादृशकर्मकरणपराणां जनान्तराणां पुन: प्रत्यवाय: ?

किञ्च—पुरा किल भृगो: पुत्र: परशुराम: स्वपितुरादेशेन स्वस्यैव जनन्या: कण्ठं परशुना चिच्छेदेतीतिवृत्तं तत्रतत्र पुराणादौ प्रत्यक्षं श्रूयते । एवं शुक्राचार्य्य: समस्तश्रौतस्मार्तधर्माधर्मपारदृश्वा सन्नपि सुरापानं चर्करीतिस्मेति च पुरावृत्तं तत्रतत्र पुराणादौ स्पष्टं श्रूयते । एवम्, सौत्रामण्यां सुरापानं द्विजोत्तमानामपि श्रुत्यैव विहितम्, मधुपर्कादौ तु गोवधोऽपि श्रुत्या स्मृत्या च विहित एव । तथैवं पुन: सकलजगद्विधाता भगवान्विधाता निजामेव दुहितरं सरस्वतीं परिणीतवान्— इत्यपि पुरावृत्तं तत्रतत्र पुराणादौ श्रूयते किल । किमिति ? ते पुत्र्युद्वाहगोवधसुरापानमातृकण्ठच्छेदनपत्नीकण्ठच्छेदनादेशादय आचारा धर्म्या अधर्म्या वा ? अधर्म्या यदि ? किमिति तैस्तथाऽऽचरिता: ?, धर्म्या एव यदि ? तर्ह्यपि— इदानीन्तनानाञ्जनानां तथा कुर्वतां करिष्यताञ्च किमर्थक: प्रायश्चित्तोपदेश:?, तथाच तैराचरिता इत्येवं युष्माभिरप्यनुष्ठीयन्ते ?; को वा धर्म: ?, को वाऽधर्म: ?, कथं विवेचनीय: ? इति धर्मस्य किल गति: सूक्ष्मा वरीवृत्यते— इति—नहि पुरातनत्वमात्रेण, धर्म्यत्वमात्रेण वा पूर्वैराचरितानामपि कर्मणां साकल्येन कर्तव्यत्वं भवति— इति—

**कृतानि यानि कर्माणि देवतैर्मुनिभिस्तथा ।**

**नाचरेत्तानि कर्माणि श्रुत्वा चापि न कुत्सयेत् ॥**

इत्येतत्स्मृत्यन्तरवचनमवश्यं शरणीकर्तव्यं भवति । अत एव— तादृशानामाचाराणां **याज्ञवल्क्योऽपि** प्रतिषेधं स्मरतिस्म, यथा—

**अस्वर्ग्यं लोकविद्विष्टं धर्म्यमप्याचरेन्नतु** ॥ इति ।

नन्वेवमपि पूर्वोक्तनानाश्रुतिस्मृतिप्रभृतिवचनानां युगान्तरीयविषयकत्वेन व्यवस्थापनीयत्वे कलियुगस्थितिमतां धृतराष्ट्रपाण्डुपाण्डवानां नियोगोत्पादनस्याऽधर्म्यत्वम्— इति चेद् ?

अत्रेत्थं पुन: प्रतिवदाम:—

तत्रहि तावद् नियोगस्य साकल्येन निषिद्धस्याऽपि निर्विधिकविषयत्वेन व्यवस्थां विचार्य्यैव सविधिकस्य तु पुनस्तस्याऽऽपद्धर्म्यत्वं प्रामाणिकत्वेनाऽनुस्मृत्य सर्वथा सन्तानपरिक्षयात्मिकायामेव विपदि वर्तमानायां श्वश्रैव सत्यवत्या विधिना नियुक्तयोरपुत्रयोः स्नुषयोरम्बिकाऽम्बालिकयोर्ज्येष्ठदेवराद् व्यासाद्, एवम्– स्त्रीसङ्गमजन्यप्राणान्तात्मकशापयुतेन पत्यैव पाण्डुना पुत्रार्थं विधिना स्वयं नियुक्तयोरपुत्रयोरीप्सितसन्तानयोः कुन्तीमाद्र्योस्तु धर्मवायुशक्रदस्रेभ्य इत्येवं समुत्पादितानां धृतराष्ट्रपाण्डुपाण्डवानां कलियुगस्थितिमतामपि द्वापरयुगप्रादुर्भूतत्वेन नैवाऽधर्म्यत्वम् । तथा च– नैव धृतराष्ट्रपाण्डुपाण्डवानां नियोगोत्पादननिदर्शना विधवाविवाहसाधिकेति नहि विधवाविवाहस्य सनातनैकधर्मावलम्बिनां धर्म्यत्वम् ।

एतच्च "देवराद्वा सपिण्डाद्वा" इत्यादिना बोधितस्य सविधिकविधवानियोगस्य युगान्तरीयापद्धर्म्यत्वविषयकत्वव्यवस्थापनं सप्तपदीत उत्तरत्रैव नष्टादिपतिकाविषयम् । सप्तपदीतः पूर्वत्र तु नष्टादिपतिकानां सविधिकनियोगस्याऽऽपद्धर्म्यत्वं यद्यपि मनोरप्यभिमतमेव;

**यस्या म्रियेत कन्याया वाचा सत्ये कृते पतिः ।**
**तामनेन विधानेन निजो विन्देत देवरः ॥९।६९॥**
**यथाविध्यधिगम्यैनां शुक्लवस्त्रां शुचिव्रताम् ।**
**मिथो भजेताप्रसवात्सकृत्सकृदृतावृतौ ॥९।७०॥**

इति नियोगमभिदधताऽपि पुनस्तत्समनन्तरमेव–

**न दत्त्वा कस्यचित्कन्यां पुनर्दद्याद्विचक्षणः ।**
**दत्त्वा पुनः प्रयच्छन्हि प्राप्नोति पुरुषानृतम् ॥९।७१॥**

इति स्वेनैव पुनर्दाननिषेधात्, तथापि– पूर्वोक्तकलिवर्ज्यादिवचनान्तरबलात् तदेकवाक्यताकर्तव्यत्वेन तस्यापि तदभिमततया युगान्तरीयविषयकतयैव व्यवस्थापनौचित्यात् ।

तदेवम्– "यथाविध्यधिगम्यैनाम्" इत्यादिमनुवचनोपदिष्टो वाग्दानोत्तरत्र सप्तपदीतः पूर्वत्र नष्टादिपतिकासु शुक्लवस्त्रत्वशुचिव्रतत्वादिनियमनियन्त्रितासु देवरादीनां घृताभ्यञ्जनादिनियमनियन्त्रितानां योग्यपुत्रोत्पादनपर्यन्तमात्रं प्रत्यृतु गुरुजनप्रवर्तनाबोधितस्य गमनस्य सकृन्मात्रकर्तव्यरूप एकः,

सप्तपदीत उत्तरत्राऽपि मृतेतरनष्टादिपतिकास्वपुत्रासु सधवास्वपि प्रमीतपतिकासु चेप्सितसन्ततिषु सर्वथा सन्तानपरिक्षयात्मिकायामेव विपदि

वर्तमानायां देवरादीनामुक्तनियमनियन्त्रितानां पूर्ववद्विधिना गमनरूपोऽपरो द्वितीयः- इति द्विविधस्याप्येतस्य सविधिकस्य नियोगस्य पूर्वोक्तरीत्या युगान्तरीयविषयकाऽऽपद्धर्म्यत्वेनैव व्यवस्थापिततया नैवेदानीन्तनानां पुनर्विवाहस्य कथंकथंमपि किञ्चिन्मात्रमपि योग्यत्वम् ।

**तदेवम्, पुनः युगान्तरेषु रागत एव प्राप्तस्याऽपि विधवानियोगस्य पुनर्विधायकानां वाग्दानोत्तरत्र सप्तपदीतः पूर्वत्र नष्टादिपतिकाविषयत्वेन व्यवस्थितानाम्- नष्टे मृते प्रव्रजिते** इत्यादीनामन्येषाञ्चैतादृशां **केषाञ्चिद्**मन्वादिवचसां रागस्य स्वाधीनत्वेनाकरणपक्षेऽप्राप्ततया नियामकत्वम्;

**नोदकेन न वा वाचा कन्यायाः पतिरुच्यते ॥**
**पाणिग्रहणसंस्कारात्पतित्वं सप्तमे पदे ॥**

इति यमवचनविशेषलिङ्गेन सप्तपदीतःपूर्वत्र नष्टादिपतिकानामपि पाणिग्रहणसंस्काराभावज्ञापनात् ।

न च **नष्टे मृते प्रव्रजिते** इत्यादिवचनस्य सप्तपदीत उत्तरत्राऽपि नष्टादिपतिकाविषयत्वेन व्यवस्थापनमुचितम्; तत्र-"पतौ' इत्यस्याचारक्विवन्तप्रकृतिकसप्तम्यन्तत्वात्मकविशेषलिङ्गत्वेन "पतिसदृशे" इत्येवमर्थाऽवबोधनाद् वाग्दानोत्तरत्र सप्तपदीतः पूर्वत्रैव नष्टादिपतिकाविषयत्वेन व्यवस्थापनौचित्यात् ॥ सप्तपदीत उत्तरत्र नष्टादिपतिकाविषयत्वेन व्यवस्थितानान्तु वचनान्तराणां तादृशीनामपुत्रिणीनां पतिप्रयाणोत्तरमनुगमब्रह्मचर्य्यान्यतरकरणाऽशक्यपक्षे नियोगकरणिकायां भाव्यभूतपुत्रोत्पादनात्मिकायां भावनायां सन्तानपरिक्षयात्मकविपद्विशिष्टप्रत्यृतुसकृत्कालाधिरणकयोग्यपुत्रार्थकघृताभ्यञ्जनवाग्यमत्वादीतिकर्तव्यताविशिष्टस्यैव देवरादिकर्तृकस्य भ्रात्रादिक्षेत्रगमनस्य नियोगपदार्थतया सन्तानपरिक्षये तदभावे चर्तावनृतौ च पुत्रार्थं रत्यर्थं च सकृदसकृच्चाऽपि देवरादिकर्तृकस्य तदतिरयत्किञ्चित्कर्तृकस्य च केवलगमनरूपकरणांशस्य लक्ष्ये तदितरत्र चोभयत्रैव रागत एव प्राप्तौ गमनेन पुत्रभावना चेत्सन्तानपरिक्षयात्मकविपद्विशिष्टप्रत्यृतुसकृत्कालाधिकरणकदेवारादिकर्तृकेणैवेत्युभयतः परिसंख्यातस्याऽपि पुनः कथमितीतिकर्तव्यताकाङ्क्षायाम्- घृताभ्यञ्जनवाग्यमत्वादिनेत्थमितीतिकर्तव्यतायास्तु रागतोऽप्राप्तेस्तदुपदेशकत्वेन प्राप्तमंशमनूद्य घृताभ्यञ्जनवाग्यमत्वादिनेत्थमितीतिकर्तव्यताविधायकत्वम् । तथा च तद्विधानबलात्तद्विशिष्टस्यैव कर्तव्यतयैतस्य सप्तपदीत उत्तरत्र विहितस्य नियोगस्य करणांशमात्रे परिसंख्यासंस्पर्शसत्तया तत्रतत्रापत्स्यमानस्यानिष्टस्य

पुनरितिकर्तव्यतांशमात्रे विधिसंस्पर्शसत्तया परिसंख्यातांशश्रुताऽ निष्टबोधकतत्तद्वचनान्तराणां बाध्यतयैव परिहारसंभवात् पुनरनुगमनब्रह्मचर्य्योपदेशकतत्तद्वचनान्तरैर्वैकल्पिकत्वबोधनात् करणेऽ करणे चोभयत्राऽ पि न प्रत्यवायजनकत्वम् ।

सप्तपदीत: पूर्वत्र विहितस्य तु नियोगस्य शुक्लवस्त्रत्वशुचिव्रतत्वविशिष्टपूर्वोक्तरूपार्थतया करणांशस्य रागत: प्राप्तिवदप्राप्तेरपि सद्भावादकरणपक्षे प्रत्यवायजनकत्वेनाऽपरिसंख्याततया करणांशस्य नियामकत्वम्, इतिकर्तव्यतांशस्य तु पुन: पूर्ववद्विधायकत्वमेवेति द्विविधो हि नियोग: ।

तस्य चैतादृशस्य वेनराजदुश्चरितवशत:, कलिवर्ज्यादिवचनबलतश्च युगान्तरीयाऽऽपद्धर्म्यत्वविषयत्वेन व्यवस्थापकानां मन्वादिवचसां न कथंकथमपि विधवाविवाहसाधकत्वम् ।

अत एव- कालधर्मयो: प्राशस्त्याप्राशस्त्यनिदानीभूततत्तद्राजगर्हितचरितवशतो यथोत्तरं धर्मस्य ह्रासात्तदनुष्ठानाधिकरणभूतानां कृतत्रेताद्वापरकलीनां भेदेन तत्रतत्र कर्तव्यानां धर्माणां भेदोऽ पि मनुनैव निर्दिष्टो यथा-

**अन्ये कृतयुगे धर्मास्त्रेतायां द्वापरे परे ।**
**अन्ये कलियुगे नृणां युगह्रासाऽ नुरूपत: ॥१।८५॥** इति ।

एतेन- मानवधर्माणां प्रायश: कृतयुगविषयत्वं व्यवस्थापपितुं शक्यम्, तथाहि- **पराशर:-**

**कृते तु मानवा धर्मास्त्रेतायां गौतमा:स्मृता: ।**
**द्वापरे शङ्खलिखिता: कलौ पाराशरा: स्मृता: ।।१।२४॥** इति ॥

न च "नष्टे मृते प्रव्रजिते" इत्यस्य पाराशर्य्यवचनत्वेन "कलौ पाराशरा: स्मृता:" इति च तेनैवोक्ते: कलियुगविषयकत्वभाव्यतया युगान्तरीयविषयकत्वव्यवस्थापनमनुचितमिति वाच्यम्; कलियुगविषयकत्वेऽ पि कलिवर्ज्यवचनबलाद्युगान्तरीयविषयकत्वेन व्यवस्थापनीयानां पाराशरधर्माणां स्मृत्यन्तरीयधर्मै: सह सत्येव विरोधे बलीयस्त्वं, नान्यथेति नियोगबोधकस्मृत्यन्तरीयवचनप्रतिपादितधर्मस्याऽ नतिरिक्तत्वेनाऽ विरोधान्नैव प्राबल्यदौर्बल्यविप्रतिपत्ति:; प्रत्युत- उभयेषामपि तेषां वचसां नियोगबोधकतया सामान्यत्वेन दुर्बलानां कलिवर्ज्यवचनैर्विशेषत्वेन प्रबलैर्बाध: स्वीकर्तव्यो भवति,

तथा च वाग्दानोत्तरं सप्तपदीत: पूर्वमुत्तरं च नष्टादिपतिकानां नियोगबोधकत्वेन व्यवस्थितानामुभयेषामपि तेषां वचसां वेनराजदुराचारवशत: कलिवर्ज्यवचनबलतश्च युगान्तरीयविषयकत्वेनैव व्यवस्थापनमुचिततरम् ।

ततश्चैवम्, सप्तपदीत: पूर्वं नियमाश्रितकरणांशस्यैकस्य, तदुत्तरन्तु–परिसंख्याश्रितकरणांशस्याऽ परस्य चेत्युभयतोपि विहितेतिकर्तव्यताकस्य द्विविधस्याऽ प्येतस्य नियोगस्य दुर्वृत्तवेनराजसमयत: पूर्वत्रैव तथा-ऽ नन्यगतिकायामेव विपदि क्वाचित्कत्वेनाऽ त एव–अप्रत्यक्षश्रुतिस्मृति-साक्षात्कारवन्मात्रदृष्टतया पूर्वोदाहृतशुक्राचार्य्यपरशुरामवामदेवविश्वामित्रादीनां सुरापानमातृकण्ठच्छेदनकुक्कुरमांसजिघत्सोद्योगादिवत् कथंकथञ्चिदापद्धर्म्य-त्वेऽ पि वेनराजदुश्चरितवशतो निर्विधिकप्रवृत्ततयाऽ त एव निर्विधिकस्य तस्याऽ र्वाचीनतया च तस्य सविधिकस्यापि पुन: कलिवर्ज्यादिवचनबलत: सर्वथा निषिद्धस्य सतो युगान्तरीयविषयकत्वेनैव व्यवस्थापिततया युगान्तरीयाणामेवाऽ ऽ पद्धर्म्यत्वेनाऽ त एव हि धृतराष्ट्रपाण्डुपाण्डवानाञ्च कलियुगस्थितिमतामपि युगान्तरीयत्वसत्तयैवाऽ ऽ पद्धर्म्यत्वेऽ पि नेदानीन्त-नानामस्मदादीनां केषामपि सनातनैकधर्मावलम्बिनां तथा सनातनत्वं, धर्म्यत्वञ्च । एतेन "युगान्तरीयविषयकत्वेन व्यवस्थितस्याऽ प्येतस्य विधवानियोगस्य सनातनैकधर्मावलम्बिनां भवतामपि पुरातनत्वेन सनातन-धर्म्यत्वम्" इति तत्रतत्र पूर्वपक्षिणामुक्तिबद्धार्गलपिहितकपाटद्वयमपि सार्गलभेदं समुद्घाटितमेव, युगभेदेन धर्मभेदाद्, धर्मभेदेन धर्मिभेदात्, तथा च–युगान्तरीयसनातनैकधर्मावलम्बिनामन्यत्वम्, इदानीन्तनसनातैकधर्मावलम्बि-नाञ्चान्यत्वम्;

**तदेवं नैव विधवाविवाहो धर्म्य इति न किञ्चिदवद्यम् ।**

तथा चैवं स्थितौ "नियोग" पदस्य हि– भाव्यभूतपुत्रोत्पादनात्मिकाया भावनाया: करणत्वार्थस्य सतोऽ पि युगान्तरीयविषयकत्वेनैव व्यवस्थितत्वाद्–अद्यत्वे पुनर्भाव्यभूतपुत्रोत्पादनात्मिकायां सविधिकगमनरूपकरणिकायां भावनायां नितरामत्यन्तं योजनं **समाधिर्नियोग** इत्येवं व्युत्पत्त्या निष्पन्नयौगिकत्वव्यवस्थापनेन चित्तवृत्तिनिरोधरूपार्थाङ्गीकर्तव्यतया सप्तपदीत उत्तरत्र प्रमीतपतिकानामननुगमनपक्षे, तदितराणान्तु सर्वासां तथा सप्तपदीत: पूर्वत्र नष्टादिपतिकानामपि सर्वासामेवेत्युभयतोपि चित्तवृत्तिनिरोधद्वारा यावज्जीवं ब्रह्मचर्य्यादिपातिव्रत्यस्य पालनस्य मुक्तिसाधनत्वम् इत्यस्माभिरुक्तपूर्वमत्यन्तं श्रेयस्करमेवेति ।

अत एव– सप्तपदीत उत्तरत्र प्रमीतपतिकानामगर्भिणीबालापत्याना-मनुगमनमुपदिष्टं मुनिभि:,

तद्यथा तत्र तावद् **निर्णयसिन्धौ मनुः**– "ब्रह्मचर्य्यं चरेद्वापि प्रविशेद्वा हुताशनम्" इति । तथा– **मिताक्षरायां विष्णुः**–

"भर्तरि प्रेते ब्रह्मचर्य्यं तदन्वारोहणं वा" इति । तथा –तत्रैव **शङ्खाङ्गिरसौ**–

**तिस्रः कोटयोऽर्धकोटी च यानि रोमाणि मानुषे ।**
**तावत्कालं वसेत्स्वर्गे भर्तारं याऽनुगच्छति ॥**
**व्यालग्राही यथा सर्पं बलादुद्धरते बिलात् ।**
**तद्वदुद्धृत्य सा नारी सह तेनैव मोदते ॥**
**तत्र सा भर्तृपरमा स्तूयमानाऽप्सरोगणैः ।**
**क्रीडते पतिना सार्द्धं यावदिन्द्राश्चतुर्दश ॥** इति ।

तथा– **ब्रह्मघ्नो वा कृतघ्नो वा मित्रघ्नो वा भवेत्पतिः ।**
**पुनात्यविधवा नारी तमादाय मृता तु या ॥**
**मृते भर्तरि या नारी समारोहेद्धुताशनम् ।**
**साऽरुन्धतीसमाचारा स्वर्गलोके महीयते ॥**

इति चाऽनुगमने फलं प्रदर्श्य–

**यावच्चाग्नौ मृते पत्यौ स्त्री नात्मानं प्रदाहयेत् ।**
**तावन्न मुच्यते सा हि स्त्री शरीरात्कथञ्चन ॥**

इति पुनरननुगमने निनिन्दतुः ।

अत एव तत्रैव **व्यासोऽपि** कपोतिकाऽऽख्यानव्याजेनानुगमनेऽभ्युदयं प्रदर्शितवान् यथा–

**पतिव्रता संप्रदीप्तं प्रविवेश हुताशनम् ।**
**तत्र चित्राङ्गदधरं भर्तारं साऽन्वपद्यत ॥**
**ततः स्वर्गं गतः पक्षी भार्यया सह संगतः ।**
**कर्मणा पूजितस्तत्र रेमे च सहभार्यया ॥** इति ।

पुनस्तत्रैव **हारीतोपि**–

**मातृकं पैतृकं चापि यत्र चैव प्रदीयते ।**
**कुलत्रयं पुनात्येषा भर्तारं याऽनुगच्छति ॥** इति ।

तथाऽ **परार्के बृहस्पतिः**–

**आर्तार्ते मुदिते हृष्टा प्रोषिते मलिना कृशा ।**
**मृते म्रियेत या पत्यौ सा स्त्री ज्ञेया पतिव्रता ॥** इति ।

पुनस्तत्रैव–**अङ्गिरा** अपि–

**सद्वृत्तभावाश्रितभर्तृकाणां स्त्रीणां वियोगक्षतकातराणाम् ।**
**तासां प्रभावस्तमितेगते कं नाग्निप्रवेशादपरोऽस्ति मार्गः ॥**

इति ।

अत एव **निर्णयसिन्धौ, ब्रह्मवैवर्ते**–

**सहाऽनुगमनं शस्तं वैधव्यस्याऽथ पालनम्** इत्युक्तम् ।

यत्तु– तत्रैव– **कलौ नान्या गतिःस्त्रीणां सहानुगमनादृते** इति; तद् ब्रह्मचर्य्याऽशक्यत्वपरम् । अत एव– **अपरार्के बृहस्पतिः**–

**शरीरार्धं स्मृता जाया पुण्यापुण्यफले समा ।**
**अन्वारूढा च जीवन्ती साध्वी भर्तुर्हिताय सा ॥**

इत्युक्तवान् । तथा च गर्भिणीबालापत्यानां, तदशक्तानाञ्च विषये तु तत्रतत्र ब्रह्मचर्य्यमेवोपदिष्टं मुनिभिर्यथा– तत्र तावत् तत्रैव, **निर्णयसिन्धौ,** काशीखण्डे–

**पत्यौ मृतेऽपि या योषिद् वैधव्यं पालयेत्क्वचित् ।**
**सा पुनः प्राप्य भर्तारं स्वर्गलोके समश्नुते ॥**
**अनुयाति न भर्तारं यदि दैवात्कथञ्चन ।**
**तत्रापि शीलं संरक्षेच्छीलभङ्गात्पतत्यधः ॥**
**तद्वैगुण्यादपि स्वर्गात्पतिः पतति नान्यथा ।**
**तस्याः पिता च माता च भ्रातृवर्गस्तथैव च** ॥ इति ।

अत एव– तादृशीनां नियमविशेषा अप्युपदिष्टाः पुनः– तत्रैव **मदनरत्ने** स्कान्दे यथा–

**विधावाकवरीबन्धो भर्तृबन्धाय जायते ।**
**शिरसो वपनं तस्मात्कार्यं विधवया सदा ॥**
**एकाहारः सदा कार्यो न द्वितीयः कथञ्चन ॥**
**मासोपवासं वा कुर्याच्चान्द्रायणमथापि वा ।**
**पर्य्यङ्कशायिनी नारी विधवा पातयेत्पतिम् ।**
**नैवाऽङ्गोद्वर्तनं कार्यं स्त्रिया विधवया क्वचित् ॥**
**गन्धद्रव्यस्य संभोगो नैव कार्यस्तया पुनः** ॥ इति ।

तत्र पुनरपुत्राणां कश्चिद्विशेषोऽपि तत्रैव यथा–

**तर्पणं प्रत्यहं कार्यं भर्तुः कुशतिलोदकैः ।**
**तत्पितुस्तत्पितुश्चापि नामगोत्रादिपूर्वकम्** । इति ।

तथा तादृशीनामपुत्राणां, सपुत्राणाञ्च सर्वासां पुनर्नियमान्तरविशेषा अपि तत्रैव यथा–

**नाधिरोहेदनड्वाहं प्राणैः कण्ठगतैरपि ।**
**कञ्चुकं न परीदध्याद्वासो न विकृतं चरेत् ॥** इति ।

पुनस्तत्रैव **प्रचेता** अपि–

**ताम्बूलाभ्यञ्जनं चैव कांस्यपात्रे च भोजनम् ।**
**यतिश्च ब्रह्मचारी च विधवा च विवर्जयेत् ॥** इति ।

अत एव हि तादृशीनां पुनर्**मनुनैव** नियमविशेषा उपदिष्टा यथा–

**कामन्तु क्षपयेद्देहं पुष्पमूलफलैः शुभैः ।**
**नतु नामाऽपि गृह्णीयात्पत्यौ प्रेते परस्य तु ॥ ५॥१५७॥**
**आसीतामरणात्क्षान्ता नियता ब्रह्मचारिणी ।**
**यो धर्म एकपत्नीनां काङ्क्षन्ती तमनुत्तमम् ॥५।१५८॥**
**अनेकानि सहस्राणि कौमारब्रह्मचारिणाम् ।**
**दिवंगतानि विप्राणामकृत्वा कुलसन्ततिम् ॥५।१५९॥**
**मृते भर्तरि साध्वी स्त्री ब्रह्मचर्य्यव्रते स्थिता ।**
**स्वर्गं गच्छत्यपुत्राऽपि यथा ते ब्रह्मचारिणः ॥५।१६०॥**
**पतिं या नाभिचरति मनोवाग्देहसंयुता ।**
**सा भर्तृलोकमाप्नोति सद्भिः साध्वीति चोच्यते ॥५॥१६५॥**
**अनेन नारीवृत्तेन मनोवाग्देहसंयुता ।**
**इहाग्र्यां कीर्तिमाप्नोति पतिलोकं परत्र च ॥५।१६६॥** इति ॥

तथा– सप्तपदीतः पूर्वत्र प्रमीतपतिकानामप्येवमेव नैष्ठिकब्रह्मचर्य्यम् ।

यद्यपि– तादृशीनां पारस्परिकदाम्पत्योत्पत्तिजनकतावच्छेदकावच्छिन्न-सप्तपद्यभावेन पतित्वाभाववतो वरस्य मरणेऽपि विधवाभिन्नात्वम्, तथापि– सधवात्वजनकतावच्छेदकावच्छिन्नस्य पत्युरभावेनैव सधवाधर्माऽनधिकारात् प्रत्युत– यथाकथञ्चिद्विधवासादृश्येन तु प्रायशस्तद्धर्मार्हतया तादृशीनां मृतानुगमनपारत्रिककृत्याद्यतिरिक्तनैष्ठिकब्रह्मचर्यादिसामान्यधर्मातिदेशोपदेशो युज्यते ।

अत एव– सप्तपदीतः पूर्वं शुल्कदवरमरणे–

**कन्यायां दत्तशुल्कायां म्रियेत यदि शुल्कदः ।**
**देवराय प्रदातव्या यदि कन्याऽनुमन्यते ॥९।९७॥**

इति **मनुना** शुल्कदभ्रातृसम्प्रदानकस्य दत्तशुल्ककन्याकर्मकस्य दानस्य

कन्यानुमतिसापेक्षत्वमुख्यत्वप्रदर्शनेन दत्तशुल्काया अपि कन्याया विवाहमात्राऽननुमतौ युगान्तरेष्वपि पुनर्विनैव वैवाहिकसंस्कारमपि नैष्ठिकब्रह्मचर्य्यसूचनात्कलौ तु शुल्कग्रहणदत्तापुनर्दाननिषेधसद्भावेन विवाहानुमतिसद्भावेऽपि नैष्ठिकब्रह्मचर्य्यमेव।

अत एव हि– "कन्यायां दत्तशुल्कायाम्" इत्येतद्वचनं परमतेन युगान्तरेष्वेव कादाचित्कक्वाचित्कत्वेनोक्तवतापि तत्समनन्तरं पुनः–

**आददीत न शूद्रोऽपि शुल्कं दुहितृविक्रयम्।**
**शुल्कं गृह्णन् हि कुरुते छन्नं दुहितृविक्रयम् ॥९।९८॥**
**एतत्तु न परे चक्रुर्नाऽपरे जातु साधवः।**
**यदन्यस्य प्रतिज्ञाय पुनरन्यस्य दीयते ॥९।९९॥**
**नाऽनुशुश्रुम जात्वेतत्पूर्वेष्वपि हि जन्मसु।**
**शुल्कसंज्ञेन मूल्येन छन्नं दुहितृविक्रयम् ॥९॥१००॥**

इत्येतैर्वचनैः, तथा पूर्वत्रैव तृतीयाध्यायेपि-

**न कन्यायाः पिता विद्वान्गृह्णीयाच्छुल्कमण्वपि ॥**
**गृह्णंश्छुल्कं हि लोभेन स्यान्नरोऽपत्यविक्रयी ३॥५१॥**

इत्यनेन च वचनेन स्वमतेन युगान्तरेष्वपि शुल्कग्रहणं, दत्तापुनर्दानञ्चैतद्द्वयमपि प्रतिषिद्धवता मनुनैव कलौ तु सर्वथा साक्षात्प्रतिषिद्धमेवेति– नैष्ठिकब्रह्मचर्य्यमेवाऽऽर्थिकमवगम्यते।

तथा सप्तपदीतः पूर्वं मृतेतरनष्टादिपतिकानान्तु यथाकथञ्चित्सधवासादृश्येन सधवातया सधवाधर्मातिदेशोपदेशो यथायुज्यते तथोपरिष्टाद्यथावद्वक्ष्यते। नन्वेवमपि वाग्दानोत्तरं सप्तपदीतः पूर्वं प्रमीतपतिकानां कलिवर्ज्यादिवचननिचयबलाद् निषिद्धपुनर्दानविवाहानामत एव जीवनार्थमपि पतिकुलाश्रयणञ्चाऽनाप्नुवतीनां, तथा पुनर्भूतपूर्ववाग्दानाद्–निवृत्तस्वस्वपित्रादिनिष्ठपारस्परिकस्वत्वस्वामित्वानामत एव चोभयत्रापि ग्रासवासाच्छादनाऽनुपलब्ध्यैव सहसा शरीरपातरूपाऽनर्थाऽऽपातसंभवेन जीवनासंभवात् कथं पुनस्तासां नैष्ठिकब्रह्मचर्य्योपदेशः संभवति ? प्रत्युत तासामपराधरहितानां वराकीणां पुनर्दानविवाहनिषेधककलिवर्ज्यादिवचनजातं, कन्यातत्पित्रादिनिष्ठपारस्परिकस्वत्वस्वामित्वोभयनिवर्तकवाग्दानञ्चैतद्द्वयमपि परम्परया प्राणान्तदण्डविधायकतामापन्नम्– इति चेन्मैवंवोचत; वाग्दानस्य हि कन्यातत्पित्रादिनिष्ठपारस्परिकस्वत्वस्वामित्वोभयनिवर्तकत्वं पुनर्वरान्तरसम्प्रदानकविवाहमात्रे, नतु

तज्जीवनसंरक्षणेऽपि; वाग्दानाद्विशेषतः सप्तपद्याः कन्यात्वप्रणाशस्य चोभयोरपि तत्त्वसत्त्वेन पुनरत्र तु तयोरेकतरस्याप्यसत्त्वाद्; अत एव पूर्वत्रैव समाम्नातम्–

**अद्भिर्वाचा च दत्तायां म्रियेतोर्ध्वं वरो यदि ।**
**न च मन्त्रोपनीता स्यात्कुमारी पितुरेव सा ॥** इत्यादि ।

अथ च सत्यपि तस्मिन्कथञ्चित् सप्तपदीकन्यात्वप्रणाशवद्वाग्दानस्य पुनर्विवाह एव तत्त्वसत्त्वं, नतु तद्भरणेऽपि । एवं कलिवर्ज्यादिवचनजातमपि पुनर्दानविवाहमात्रस्यावरोधकं, न पुनस्तज्जीवनसंरक्षणस्यापि । यतः खलु पूर्वत्रैव तत्रतत्र–स्त्रीणां भरणं पतिपुत्रादितदीयबन्धुतो यथोत्तरं, तेषामभावे–पित्रादितः, तस्याऽप्यभावे–ज्ञातितः, पक्षद्वयावसाने तु– राजतोऽपि चेति प्रतिपादितमेव ।

तदेवं कथङ्कारन्नामानाथानामपराधरहितानां तादृशीनां वराकीणां ग्रासवासाच्छादनाऽनुपलब्धिः ? तथा चैतया विधया तासां जीवननिर्वाहसंभवेन नैष्ठिकब्रह्मचर्य्योपदेशस्यौचित्यान्नहि वाग्दानस्य कलिवर्ज्यादिवचनजातस्य चाऽनपराधदण्ड-विधायकताऽऽपन्नत्वमिति न क्वापि काचिदनुपपत्तिरिति ।

तदेतत्साधुसिद्धं तादृशीनां पित्रादिकुलजीवननिर्वाहपूर्वकनैष्ठिक-ब्रह्मचर्य्यमिति ।

एवं सप्तपदीतः पूर्वं मृतेतरनष्टादिपतिकानामपि यावज्जीवं कर्तव्यभूतानां विशेषधर्माणामग्रत एव वक्ष्यमाणतया तदतिरिक्तजीवननिर्वाह-स्त्वेतयैव विधया कर्तव्यो भवति; पूर्वाविशेषात् । अवश्यकर्तव्यविशेषवशतो देशान्तरगमनादिना कञ्चित्कालं नष्टस्यापि, व्याध्यादिनोपसृष्टपूर्वस्यापि पश्चात्तन्मुक्तस्य वा वरस्य पुनरुपस्थिति- संभावनासंभवे तु तं प्रतीक्ष्यैव तेनैव सह तस्या विवाहः कलावपि भवत्येवेत्येतत्साधकवचनान्तराणि तु पुनःस्मृत्यन्तरतो ऽवगम्यन्त एवेति किं बहुना ?

ततश्च पुनः प्रकृतमनुसरामः–

तथा चैवं स्थितौ सप्तपदीतः परं क्लीवादिनिरंशकेतर-प्रमीतपतिकानामपुत्राणामपि साध्वीनामेव प्रमीतस्य पत्युः समग्रधनसंबन्धं, पिण्डदानं चोक्तवतां वृद्धमन्वादीनां मिताक्षरादिषु वचनान्यपि सुसङ्गतानि भवन्ति; तानि च यथा– तत्र तावद् **मिताक्षरायां** वृद्धमनुः–

**अपुत्रा शयनं भर्तुः पालयन्ती व्रते स्थिता ।**
**पत्न्येव दद्यात्तत्पिण्डं कृत्स्नमंशं लभेत च ॥**

इति । तथा तत्रैव **कात्यायनश्च–**

**पत्नी पत्युर्धनहरी या स्यादव्यभिचारिणी ॥**

इति । तत्रैव पुन**र्बृहस्पतिरपि–**

**भर्तुर्धनहरी पत्नी तां विना दुहिता स्मृता ॥**

इति पुनस्तत्रैव **विष्णुश्च–**

**अपुत्रधनं पत्न्यभिगामि, तदभावे दुहितृगामि ॥**

इति । पुनरपि तत्रैव **कात्यायनोऽपि–**

"अपुत्रस्यास्य कुलजा पत्नी दुहितरोपि वा ।"

इति । तथा– **याज्ञवल्क्यो**प्येवं स्मरतिस्म, यथा–

**पत्नीदुहितरश्चैव पितरौ भ्रातरस्तथा ॥२।१३५॥**

इति । अत एव **चाऽपरार्के– व्यासोऽपि–**

**पूर्वं मृता हरेदग्निमन्वारूढा हरेदघम् ।**
**भर्तुर्धनमभावे तु जीवन्ती सत्सु बन्धुषु ॥** इत्येवं व्याजहार ।

ततश्चैवं हि क्लीवादिनिरंशकपतिकानामपि विधवानां, सधवानाञ्चाऽपुत्राणां, पुत्रीसहितानामपि साध्वीनामेव भरणमात्रम् । तदितरासान्तु व्यभिचारिणीनां, प्रतिकूलानाञ्चाऽपि पुनर्निर्वासनमित्येवं द्वयमप्यनुशिष्टं सङ्गच्छते । यथाह **याज्ञवल्क्यः–**

**अपुत्रा योषितश्चैषां भर्तव्याः साधुवृत्तयः ।**
**निर्वास्या व्यभिचारिण्यःप्रतिकूलास्तथैव च ॥२।१४२॥** इति ॥

अत एव खलु–

सप्तपदीतः परं मृतेतरनष्टादिपतिकानां हि स्वसम्बन्धिनां पतीनां नाशप्रव्रजनक्लैव्यपातित्याद्यन्यतमसत्तायामपि जीवनस्य तु पुनः सत्तयैव सधवानाम्, तत्पूर्वन्तु– तादृशीनां पारस्परिकदाम्पत्योत्पत्तिजनकतावच्छेदकावच्छिन्नायाः सप्तपद्या अनुत्पत्त्या सधवात्वेन वक्तुमशक्यत्वेऽपि पुनर्वैधव्यजनकतावच्छेदकावच्छिन्नपतिमरणस्याऽप्यभावेन वैधव्यधर्मातिदेशोपदेशाऽनौचित्यात्– प्रत्युत– यथाकथञ्चित्सधवासादृश्येन तु व्यवहर्त्तुमवश्यशक्यतयैव सधवानामपि तासां पुनः पारस्परिकदाम्पत्योत्पत्तिजनकतावच्छेदकावच्छिन्नायाः सप्तपद्या अनुत्पत्त्यैव कन्यातत्पित्रादिनिष्ठपारस्परिकस्वत्वस्वामित्वोभयनिवर्तककन्यात्वप्रणाशजनकतावच्छेदकावच्छिन्नोद्वाहपुंसम्प्रयोगरजोदर्शनसमष्टिविशिष्टत्वाऽसत्त्वेन कन्यातत्पित्रादिनिष्ठपारस्परिकस्वत्व–

स्वामित्वोभयाऽ निवर्तककन्यात्वाप्रणाशजनकतावच्छेदकावच्छिन्नाऽ नुद्वाहपुमसम्प्रयोगारजोदर्शनसमष्टिव्यष्ट्यन्यतरसमष्टिमात्रविशिष्टत्वसत्त्वेन चोभयतोऽपि तथा तदुत्तरन्तु पुनस्तादृशीनां पारस्परिकदाम्पत्योत्पत्तिजनकतावच्छेदकावच्छिन्नाया:सप्तपद्या उत्पत्त्या कन्याततत्पित्रादिनिष्ठपारस्परिकस्वत्वस्वामित्वोभयनिवर्तककन्यात्वप्रणाशजनकतावच्छेदकावच्छिन्नोद्वाहपुंसम्प्रयोगरजोदर्शनसमष्टिविशिष्टत्वस्य, तथा– कन्याततत्पित्रादिनिष्ठपारस्परिकस्वत्वस्वामित्वोभयाऽ निवर्तककन्यात्वाऽ प्रणाशजनकतावच्छेदकावच्छिन्नाऽ नुद्वाहपुमसम्प्रयोगारजोदर्शनसमष्टिव्यष्टचन्यतरसमष्टिमात्रविशिष्टत्वस्य चासत्त्वेऽपि पुनस्तन्निष्ठतत्त्वोभयानिवर्तककन्यात्वाप्रणाशजनकतावच्छेकावच्छिन्नानुद्वाह-पुमसम्प्रयोगा-रजोदर्शनसमष्टिव्यष्टचन्यतरव्यष्टिमात्रविशिष्टत्वस्य त्वेकतरस्य सत्त्वेनैकत एव पुनस्तासामुभयविधानामपि कन्याततत्पित्रादिनिष्ठपारस्परिकस्वत्वस्वामित्वोभयसत्तयैव कन्यानिष्ठपित्रादिनिरूपितस्वत्वपित्रादिनिष्ठकन्यानिरूपितस्वामित्वोभयसत्तावद् वाङ्मात्रतोऽपि दानस्य कन्याततत्पित्रादिनिष्ठपारस्परिकस्वत्वस्वामित्वोभयनिवृत्तिपूर्वककन्यावरनिष्ठपारस्परिकस्वत्वस्वामित्वोभयजनकतावच्छेदकावच्छिन्नत्वाऽर्थकत्वेन तस्य च पुनर्निष्पन्नपूर्वत्वसत्तयैव तद्बोधकेन–

**न दत्त्वा कस्यचित्कन्यां पुनर्दद्याद्विचक्षण: ।**
**दत्त्वा पुन: प्रयच्छन्हि प्राप्नोति पुरुषानृतम् ॥९।७१॥**

इति **मनुवचनेनैव** पुनर्दाननिषेधाद् मृतीतरनाशाद्यन्यतमेन सर्वथा सर्वात्मना पतिपरिचरणाद्याचरणालाभेऽपि प्रमीतपतिकाकर्तव्यभूताऽनुगमनशिरोवपनादिवैधव्यपालनाऽन्यतरकरणाऽनर्हत्वात्प्रत्युत– उक्तरीत्या सधवात्वेन सधवात्वसंरक्षणशास्त्राऽविरुद्धतद्वितयथोचितपरिचरणादिकर्म्मणामवश्यकर्तव्यत्वेन तत्रतत्रत्यतत्तदुपदिष्टसधवाधर्मातिदेशोपदेशो युज्यते; तद्यथा तत्र तावन्**मनु:**–

**यस्मै दद्यात्पिता त्वेनां भ्राता वाऽनुमते पितु: ।**
**तं शुश्रूषेत जीवन्तं संस्थितं च न लङ्घयेत् ॥५॥१५१॥**

इति पत्युर्जीवत: शुश्रूषां, प्रमीतस्यापि पुनर्व्यभिचारादितोऽ-लङ्घनञ्चोपदिशन्नेव तत्समनन्तरम्–

**मङ्गलार्थं स्वस्त्ययनं यज्ञश्चासां प्रजापते: ।**
**प्रयुज्यते विवाहेषु प्रदानं स्वाम्यकारणम् ॥५।१५२॥**

इति– प्रदानमात्रस्याऽपि कन्यावरनिष्ठपारस्परिकस्वत्वस्वामित्वोभयजनकतावच्छेदकावच्छिन्नत्वं प्रतिपाद्य-

**विशील: कामवृत्तो वा गुणैर्वा परिवर्जित: ।**
**उपचर्य्य: स्त्रिया साध्व्या सततं देववत्पति: ॥५॥१५३॥**

इति– "विशील:, कामवृत्त:, गुणै: परिवर्जित:" इत्येतै: पदै: संगृह्यमाणानां नष्टप्रव्रजितक्लीवपतितादीनामपि पतीनां निरन्तरपरिचरणानुशासनञ्च पुनरुपदिश्य–

**नास्ति स्त्रीणां पृथग्यज्ञो न व्रतं नाऽप्युपोषणम् ।**
**पतिं शुश्रूषते येन तेन स्वर्गे महीयते ॥५॥१५४॥**

इति स्वर्गस्य साधनभूतानपि यज्ञव्रतोपवासान्प्रतिषेधन्– पुन: पतिशुश्रूषाया एव तत्साधनत्वं प्रदर्शितवान्; अत एव पूर्वत्र वचने "देववत्" इति पदस्य स्वारस्यसङ्गतिश्च । अत एव तेनैव–

**यस्मै दद्यात्पिता त्वेनाम्** इत्येतत्पूर्वतरम्–
**पित्रा भर्त्रा सुतैर्वापि नेच्छेद्विरहमात्मन: ।**
**एषां हि विरहेण स्त्री गर्ह्ये कुर्यादुभे कुले ॥५॥१४९॥**

इति भर्तृपितृसुतानां विरहेणाऽवस्थानस्य भर्तृपितृकुलद्वयनिन्दाजनकत्वप्रदर्शनद्वारा तन्निषेधस्मरणं समुपपन्नम् । तथा **याज्ञवल्क्योऽपि–**

**क्रीडां शरीरसंस्कारं समाजोत्सवदर्शनम् ।**
**हास्यं परगृहे यानं त्यजेत्प्रोषितभर्तृका ॥१।८४॥**
**पितृमातृसुतभ्रातृश्वश्रूश्वशुरदेवरै: ।**
**हीना न स्याद्विना भर्त्रा गर्हणीयाऽन्यथा भवेत् ॥१।८६।**
**पतिप्रियहिते युक्ता स्वाचारा विजितेन्द्रिया ।**
**सेह कीर्तिमवाप्नोति प्रेत्य चानुत्तमां गतिम् ।१।८७॥** इति ॥

तथा– अन्यत्र च–

**हृष्टा हृष्टे विषण्णा स्याद्विषण्णास्ये प्रिये सदा ।**
**एकरूपा भवेत्पुण्या संपत्सु च विपत्सु च ॥** इति,
**मूर्खं कुरूपं मलिनं दरिद्रं रुग्णं च पङ्गुं स्वपतिं तु देवम् ।**
**संमानयन्ती मनसा च वाचा कायेन शुश्रूषणतत्परा स्यात् ॥** इति च।

एवम्– **स्कन्दपुराणे** तत्रतत्र काशीखण्डे–

**क्लीवं वा दुरवस्थं वा व्याधितं वृद्धमेव च ।**
**सुस्थितं दु:खितं वापि पतिमेकं न लङ्घयेत् ॥** इति,
**दरिद्रं व्याधितं दीनमध्वना परिकर्शितम् ।**
**पतिं पुत्रमिवोपास्ते सा नारी धर्मभागिनी ॥** इति,

**अहं स्वर्गं नहीच्छेयं त्वय्यप्रीते महेश्वर ?**
**यदि कार्यमकार्यं वा यदि वा प्राणनाशनम् ॥**
**पतिर्ब्रूयाद्दरिद्रो वा व्याधितो वा कथञ्चन** । इति च ।
अत एव हि **अपरार्के मनुः**–
**दानात्प्रभृति या तु स्याद्यावदायुः पतिव्रता ।**
**सा भर्तृलोकमाप्नोति यथैवाऽरुन्धती तथा ॥**
इति च प्रोक्तवान् । तथा चैतेन खल्वेतदपि प्रतीयते–

सप्तपदीतः पूर्वं कन्यावरयोः पारस्परिकदाम्पत्योत्पत्तिजनकतावच्छेदकावच्छिन्नायाः सप्तपद्या अनुत्पत्तेरनुत्पन्नपारस्परिकदाम्पत्ययोरपि तयोः पुनर्वाग्दानमात्रस्यापि पारस्परिकस्वत्वस्वामित्वोभयजनतावच्छेदकावच्छिन्नत्वसत्तया पारस्परिकदाम्पत्यसादृश्यसत्ताऽभिप्रायेण किञ्चिद्दाम्पत्योत्पत्तिमङ्गीकृत्यैव– **दानात्प्रभृति या तु स्याद्यावदायुः पतिव्रता ॥** इत्येवं वाक्यं प्रयुक्तवान्– **मनुः**; अन्यथा– **सप्तमपदात्प्रभृति** इत्याद्येव प्रायोक्ष्यद्– इति । अत एव तथा– अन्यत्राऽपि–

**अन्धकं लुब्धकं वापि कुष्ठाङ्गं व्याधिपीडितम् ।**
**आपद्गतञ्च भर्तारं न त्यजेत्सा महासती ॥** इति ।
एवमेव **पराशरश्च**–
**दरिद्रं व्याधितं मूर्खं भर्तारं याऽवमन्यते ।**
**सा शूनी जायते मृत्वा शूकरी च पुनः पुनः** इति ।
तथा– **हरिवंशेऽपि**–
**व्याधितः पतितो वापि दीनो वापि कथञ्चन ।**
**न त्यक्तव्यः स्त्रिया भर्ता धर्म एष सनातनः ॥** इति ।

अतश्चैवंविधास्तत्र तत्र सर्वत्र नैकशः समुपलभ्यमानाः सधवाधर्मास्तादृशीनामपि कर्तव्या भवन्ति । अत एव हि– सप्तपदीतः पूर्वं परञ्च नष्टादिपतिकानां कन्याततत्पित्रादिनिष्ठस्वत्वस्वामित्वोभयाऽनिवर्तककन्यात्वाप्रणाशजनकतावच्छेदकावच्छिन्नाऽनुद्वाहपुमसम्प्रयोगारजोदर्शनसमष्टिव्यष्टचन्यतरव्यष्टिमात्रविशिष्टानामपि सर्वासामेतादृशीनां कन्यात्वस्य साकल्येनाप्रणाशाद्–अन्यतः क्षतयोनित्वेप्येकतस्त्वक्षतयोनित्वेनैव कन्याभिन्नात्वेऽपि पुनरकन्यात्वाभावेन प्रत्युत यत्किञ्चित्कन्यात्वाऽवस्थितिद्वारा कन्यासादृश्यसत्ताभिप्रायेणैव कन्यात्वं स्वीकृत्य युगान्तरीयाऽऽपद्धर्म्यत्वविषयकत्वव्यवस्थापितौ पुनर्विवाहात्मकसंस्कारनियोगौ समुपपद्येते । एतत्तु पुनरक्षतयोनित्वक्षतयोनित्वकन्यात्वाऽकन्यात्वादिविषयविचारान्तरं मत्कृतायां **कन्योद्वाहसमयमीमांसायां** पूर्वोत्तरपक्षरूपेण सविस्तरं प्रपञ्चितम् ।

नन्वेवमपि सप्तपदीतः पूर्वं परञ्च नष्टादिपतिकानां कन्यात्वप्रणाशजनकतावच्छेकावच्छिन्नोद्वाहपुंसम्प्रयोगरजोदर्शनसमष्टिविशिष्टत्वासद्भावेन क्षतयोनितया कन्याभिन्नात्वेऽपि कन्यात्वाप्रणाशजनकतावच्छेदकावच्छिन्नाऽनुद्वाहपुमसम्प्रयोगाऽरजोदर्शनसमष्टिव्यष्ट्यन्यतरव्यष्टिमात्रविशिष्टत्वसद्भावेनाऽक्षतयोनितया पुनरकन्याभिन्नत्वेन कन्यात्वस्य साकल्येन प्रणाशाभावात्किञ्चिन्मात्राऽवस्थित्या कन्यासादृश्यसत्ताऽभिप्रायेणैव कन्यात्वमाश्रित्य पुनर्विवाहात्मकसंस्कारोपदेशकानां, नियोगोपदेशकानाञ्च पूर्वोक्तनानास्मृतिवचनानामुद्देश्यतावच्छेदकत्वस्य साकल्येन सत्तया युगान्तरीयविषयकत्वव्यवस्थापनया समुपपत्तावपि धृतराष्ट्रपाण्डुपाण्डवानाञ्जननीषु त्वम्बिकाऽम्बालिकाकुन्तीमाद्रीषु पुनः सप्तपदीतः परतरमेव यथायथं प्रमीतशप्तपतिकात्वेन कन्यात्वप्रणाशजनकतावच्छेदकावच्छिन्नोद्वाहपुंसम्प्रयोगरजोदर्शनसमष्टिविशिष्टत्वसत्तया, कन्यात्वाऽप्रणाशजनकतावच्छेदकावच्छिन्नाऽनुद्वाहपुमसम्प्रयोगाऽरजोदर्शनसमष्टिव्यष्टिविशिष्टत्वासत्तया च सर्वथा क्षतयोनित्वेन कन्यात्वस्य साकल्येन प्रणाशाद्– अकन्यातया युगान्तरीयास्वपि पुनस्तासु तदुद्देश्यतावच्छेदकत्वस्य साकल्येनाऽसत्त्वान्नियोगव्यभिचार इति चेन्न; कन्यात्वमाश्रित्यैव पुनर्विवाहसंस्कारोपदेशकानां, नियोगोपदेशकानाञ्च पूर्वोक्तानां नानास्मृतिवचनानां तत्रतत्रोद्देश्यतावच्छेदकत्वस्य साकल्येनाऽसत्त्वेऽपि कन्यात्वमनाश्रित्यैवापि नियोगोपदेशकानां केषाञ्चित्पूर्वोक्तानामेव–

**देवराद्वा सपिण्डाद्वा स्त्रिया सम्यङ्नियुक्तया ॥**

इत्यादिमन्वादिवचनानान्तु तत्र पुनरुद्देश्यतावच्छेदकत्वस्य साकल्येन सत्तया तद्व्यभिचारस्यैव व्यभिचारात् ।

तदेवम्, खलु पूर्वत्र तत्रतत्र पूर्वोत्तरपक्षप्रमाणरूपेण समुदाहृतनानाश्रुतिस्मृतिपुराणादिवचननिचयप्राबल्यवशाद् धर्मतो, न्यायतो, व्यवहारतश्चाऽपि सर्वथैवाऽतिमात्रं विरुद्धस्य विधवाविवाहस्य स्वप्नवचनश्रवणचिन्तनमात्रस्याऽपि पापातिशयकरतया सुतरामधर्म्यत्वम्, अन्याय्यत्वम्, अव्यवहर्तव्यत्वञ्च– इत्येतत्त्रितयसमष्टिवैशिष्ट्यं सिद्धम् ।

हरिः, ॐ तत्सत्, श्रीकृष्णार्पणमस्तु ।
इति श्रीपण्डितडिल्लीराजशर्मकृते **विधवोद्वाहतिमिरालोके**–
उत्तरार्द्ध समाप्तम्,
समाप्तश्चाऽयं **विधवोद्वाहतिमिरालोकः** ।
१९९५ वैक्रमाब्दीयाऽऽषाढशुक्लैकादश्यां
समाप्तिमगमत्– शुभम् ।

